# प्राक्कथन

नवीन पाठ्यक्रमके अनुसार सिद्धान्तकौमुदीका भी पठन-पाठन बदल गया है। परन्तु विद्वान् परीक्षक प्रश्नका कलेवर नहीं बदलते। प्रश्नोंका स्वरूप वस्तुतः पूर्ववत् ही चल रहा है। ५५ ई० तक जितने प्रश्न पूछे गये हैं, प्रायः कोई भी फक्किकांश वर्जित नहीं हैं। अस्तु, प्रश्नोत्तर लिखते समय मैंने यह भी गम्भीर अध्ययन किया है कि जो जो प्रयोग पूछे जाते हैं उनका उत्तर यदि सीधे-सादे रूपमें दे दिया जाय तो परीक्षक सन्तुष्ट नहीं होंगे। क्योंकि जिन-जिन प्रयोगोंके ऊपर शास्त्रार्थका अंश छिपा रहता है परीक्षक प्रायः उसीको बारंवार पूछते हैं। मैंने अधिक स्थलोंपर परीक्षकका अभिप्राय ध्यानमें रखकर ही प्रश्नोत्तर लिखा है। जहाँ ऐसा नहीं है वहाँ कोष्ठक ( ) में या नई पंक्ति से विषयको पृथक् कर दिया गया है।

यत्र तत्र (क) (ख) के रूपमें एक ही प्रश्नका उत्तर भिन्न-भिन्न प्रकार से इसलिए लिखा गया है कि कोमल मति परीक्षार्थी अभ्यास करके भी परीक्षामें फक्किकाओंके दुरूहांशसे मुक्त हो जायेंगे। विद्यार्थियोंके हितको ध्यानमें रखकर इस वार प्रश्नोत्तरीका कलेवर ही बदल दिया गया है। प्रकरण के अनुसार प्रश्नोत्तर हो जानेसे अध्ययनके समयसे ही विद्यार्थी यदि प्रश्नोत्तरका भी मनन करते रहेंगे तो गुरुमुखसे पाठ श्रवण मात्र करने पर भी विद्यार्थियोंको सुखरूपेण ग्रन्थाशय समझमें आजायगा। इसे प्रश्नोत्तरी ही नहीं प्रत्युत सिद्धान्तकौमुदीकी लघु टीका ही समझनी चाहिए। मैंने इस वार इसी दृष्टिसे इसका कलेवर बदल दिया है। सिद्धान्तकौमुदीमें जितने प्रष्टव्यांश हैं प्रायः सभी प्रश्नोत्तरीमें आगये हैं।

ग्रंथान्तमें ११२ पृष्ठके आगे प्रश्नपत्रोंके अविकल रूप दिये गये हैं विद्यार्थियोंको चाहिये कि वे प्रश्नोत्तर पढ़ते समय प्रश्नका स्वरूप प्रश्नपत्रमें अवश्य देख लिया करें। इससे प्रश्नोत्तर समझनेमें उन्हें बड़ी सरलता होगी।

वसन्तपंचमी
सं० २०१२

विनीत—
—लेखक

# प्रकरणसूची

॥ श्रीः ॥

व्याकरणमध्यमा-

# सोत्तरा प्रश्नावली

मङ्गलाचरणम्

ओङ्कारं मुरलीधरं प्रभुवरं वृन्दावनाधीश्वरं
भक्ताभीष्टफलप्रदं सुरवरैरासेव्यपादाम्बुजम्।
वन्दे रासविहारिणं निजजनानन्दप्रदं माधवं
श्रीराधादिसमस्तगोपवनिता संसेव्यमानं प्रभुम्॥

## अथ कारकप्रकरणम्

### तत्र प्रथमा विभक्तिः

**कृष्णः** (ई० १९३०)—कृष्णशब्दस्य प्रातिपदिकसंज्ञायां सत्यां कृष्णत्वकृष्ण-पुंस्त्वार्थत्रयाणां नियमेनोपस्थित्या प्रातिपदिकार्थसूत्रे लिङ्गग्रहणेन नियतोपस्थितिक-रूपप्रातिपदिकार्थग्रहणेऽपि तत्त्वाक्षतेस्तेषामेव प्रतिपाद्यत्वेन विवक्षायां 'प्रातिपदिका-र्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति सूत्रेण 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवाक्य-तया प्रथमैकवचनसुप्रत्यये 'उपदेशेऽजनुनासिक इत्' इत्युकारस्येत्संज्ञायां 'तस्य लोपः' इति लोपे रुत्वे विसर्गे च 'कृष्णः' इति सिद्धम्।

---

**नोट** :—जिस ई० में जो जो प्रश्न पूछे गये हैं उन उन प्रश्नों के आगे कोष्ठक में उन उन ई० के अंक निर्देश कर दिये गये हैं। प्रश्नों का अविकल रूप ग्रन्थ के अन्त में देखें।

( ननु स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकेति पञ्चविधः प्रातिपदिकार्थः इति पक्षे स्वार्थ-द्रव्य-लिङ्गेति त्रिविधप्रातिपदिकार्थपक्षे च कृष्णादिशब्दे लिङ्गस्याऽपि प्रातिपदिकार्थत्वात् लिङ्गग्रहणं व्यर्थमिति चेन्न, तदेव व्यर्थं सत् 'नियतोपस्थितिकः प्रातिपदिकार्थः' इति विलक्षणः प्रातिपदिकार्थं बोधयति । तदर्थश्च—'यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थितिः स प्रातिपदिकार्थः इति । 'कृष्णः' इत्यादौ पुंस्त्वविशिष्टवासुदेवापत्यरूपार्थस्य नियमेन उपस्थितिर्भवतीति तत्र प्रथमा सिद्ध्यति । )

**श्रीः** ( ई० ५० )—श्रीशब्दे स्त्रीत्वस्य नियमेन भानमस्तीति लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात् 'प्रातिपदिकार्थलिङ्गवचनमात्रे प्रथमा' इति सूत्रेण अत्र प्रातिपदिकार्थमात्रे प्रथमा भवति ।

**नोच्चैः** ( ई० ४९ )—'अव्ययादाप्सुपः' इति सूत्रे 'अव्ययग्रहणं व्यर्थमलिङ्गत्वात्' इति भाष्योक्तरीत्या अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यनेनाऽत्र प्रातिपदिकार्थमात्रे प्रथमा भवति । नन्वत्र अव्ययात् प्रथमोत्पत्तेः फलाभावः 'अव्ययादाप्सुपः' इति लुकोऽवश्यं प्रवृत्तेरिति चेन्न, पदत्वार्थं सुबुत्पत्तेरावश्यकत्वात् । तेन नीचैरित्यादौ रुत्वविसर्गौ 'नीचैस्तेऽसम्यग्भाषणम्' इत्यादौ तेमयादिसिद्धिश्च भवति ।

( क ) **प्रातिपदिकार्थेति सूत्रे परिमाणग्रहणप्रयोजनम्** ( ई० ३७ )—ननु द्रोणादीनां परिमाणमर्थः, इति तेभ्यः प्रातिपदिकार्थमात्र एव प्रथमा सिद्धौ प्रातिपदिकार्थेति सूत्रे परिमाणग्रहणं व्यर्थमिति चेन्न, परिमाणग्रहणाभावे प्रातिपदिकार्थे प्रथमाविधानात् प्रातिपदिकार्थस्य प्रत्ययार्थत्वात् तत्र द्रोणस्य अभेदेन अन्वयः, प्रत्ययार्थस्य च तस्योक्तसम्बन्धेन व्रीहावन्वयः, ततश्च द्रोणाभिन्नो व्रीहिरिति बोधः स्यात्—'नामार्थद्वयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः' इति व्युत्पत्त्यनुरोधात् । तस्मादत्र परिमाणग्रहणमावश्यकम् । कृते हि परिमाणग्रहणे द्रोणशब्दात् प्रथमाविधानेन परिमाणस्य प्रत्ययार्थत्वात् तत्र प्रकृत्यर्थस्य द्रोणस्याऽभेदेन ( अर्थात् 'इतरसम्बन्धावच्छिन्नविशेषणविशेष्यभावसम्बन्धेन ) अन्वयः । प्रत्ययार्थस्य ( परिमाणस्य ) परिच्छेद्यपरिच्छेदकभावेन व्रीहान्वयः । तथा च—द्रोणाऽभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिः' इति फलतीति दिक् ।

( ख ) **द्रोणो व्रीहिः** (ई० ३२, ४२, ४८, ५०, ५२)—परिमाणमात्रे द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रकृत्यार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः। अयमर्थः–'परिमाणमात्रे प्रथमा' इत्यस्योदाहरणं 'द्रोणो व्रीहिः' इत्यत्र 'द्रोणः' इति। तत्र द्रोणत्वद्रोणपुंस्त्वार्थानां नियमेन उपस्थित्या प्रातिपदिकार्थत्वेऽपि परिमाणत्वेन परिमाणस्य नियमेनानुपस्थितेः प्रातिपदिकार्थत्वाभावेन परिमाणरूपेऽर्थे परिमाणग्रहणेन प्रथमा। तथा च द्रोणपदेन द्रोणत्वावच्छिन्नद्रोणस्योपस्थित्या तस्य सुप्रत्ययोपस्थितपरिमाणार्थेन 'सामान्यविशेषयोरभेदेनान्वयः' इति व्युत्पत्त्याऽभेदान्वये सुप्रत्ययार्थपरिमाणस्य व्रीहिपदेनोपस्थितव्रीह्यर्थे 'राज्ञः पुरुषः' इत्यादाविव आकांक्षाभास्यपरिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वय इति द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः सिद्ध्यति। द्रोणपदात् प्रातिपदिकार्थमात्रे प्रथमा प्रवृत्तौ तु 'नामार्थयोरभेदेनान्वयः' इति व्युत्पत्त्या द्रोणव्रीहिपदार्थयोरभेदेनैवान्वयः स्यादिति द्रोणाभिन्नो व्रीहिरित्यनिष्टार्थापत्तिरिति व्रीहौ द्रोणपरिमाणभेदस्याऽनुपपत्त्या द्रोणशब्दस्य द्रोणपरिमिते लक्षणापत्तिश्चेति।

( ग ) **प्रातिपदिकार्थलिङ्गेति सूत्रे परिमाणपदतात्पर्यम्** (ई० ४६)—अयम्भावः—प्रातिपदिकार्थमात्रे प्रथमासिद्धौ किमर्थं परिमाणग्रहणमिति चेत्, 'नामार्थद्वयोरभेदादतिरिक्तः सम्बन्धोऽव्युत्पन्नः' इति व्युत्पत्त्या 'द्रोणाऽभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिः' इति सिद्धान्तकौमुद्युक्तार्थानुपपत्तेः। परिमाणग्रहणसत्त्वे तु प्रत्ययार्थे परिमाणे प्रकृत्यर्थः (द्रोणरूपार्थः) अभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहौ विशेषणमिति।

**कारकस्य किं लक्षणम्?**—क्रियाजनकत्वेन अन्वयित्वं कारकत्वम्। क्रियान्वयित्वं कारकत्वमित्येतावन्मात्रस्वीकारे 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यत्र ब्राह्मणस्यापि कारकत्वं स्यात्। 'साक्षात् क्रियान्वयित्वं कारकत्वम्' इति स्वीकारे तु 'मातुः स्मरति' इत्यत्र मातुः कारकत्वे 'षष्ठ्याः कारकत्वं नास्ति' इति वचनाऽसङ्गतिः स्यादतः 'क्रियाजनकत्वेनाऽन्वयित्वं तत्त्वमित्यवसेयम्।

**एकः, द्वौ, बहवः** (ई० ४६, ५४)—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति सूत्रेण वचनमात्रेऽत्र 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवाक्यतया

क्रमेण प्रथमैकवचनादिविभक्त्युत्पत्तौ स्वादिकार्ये एकः, द्वौ, बहवः इति त्रयाणां क्रमेण सिद्धिर्भवति ।

नन्वत्र प्रातिपदिकार्थमात्रे प्रथमासिद्धौ सूत्रे वचनग्रहणं किमर्थमिति चेन्न, 'उक्तार्थानामप्रयोगः' इति निषेधात् 'एकः' इत्यादौ प्रथमाऽनापत्तेः । अन्या विभक्तिस्तु न सम्भवति अन्वितार्थकविभक्तिकल्पनापेक्षया अनुवादकविभक्तेरेव न्याय्यत्वादिति ।

**हे राम** ( ई० ३४, ४९ )—अत्र 'सम्बोधने च' इति सूत्रेण सम्बोधने अधिके गम्येऽपि रामशब्दात् 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवाक्यतया प्रथमैकवचनसुप्रत्यये 'उपदेशेऽजनुनासिक इत्' इत्युकारस्येत्संज्ञायां 'तस्य लोपः' इति लोपे 'एङ्ह्रस्वात्सम्बुद्धेः' इति सुलोपे 'हे राम' इति । मां पाहीति शेषः । सम्बोधनम्—'अभिमुखीकृत्य ज्ञापनम्' इति । इह रामं प्रति मद्रक्षणं ज्ञाप्यम् ।

## अथ द्वितीया विभक्तिः

( क ) **कर्तुः किमिति** ( ई० ४४, ४८, ५१ )—अयम्भावः—कारकाधिकारेण व्यापारलाभात् तेन कर्तुराक्षेपात् 'कर्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारिकेच्छानिरूपितविषयताश्रयः कर्म' इत्यर्थे 'देवदत्तो ग्रामं गच्छति' इत्यादौ देवदत्तकर्तृवृत्तिव्यापारः—उत्तरदेशसंयोगानुकूलः, तत्प्रयोज्यं फलमुत्तरदेशसंयोगरूपम्, तादृशफलवत्त्वप्रकारिकेच्छा मद्वृत्तिव्यापारप्रयोज्यफलाश्रयः ग्रामो भवत्वित्याकारिका, तादृशेच्छानिरूपिता विषयता ग्रामनिष्ठा, तादृशविषयताश्रयस्य ग्रामस्य कर्मत्वे सिद्धे कर्तुग्रहणं किमर्थमिति चेन्न, तस्य प्रकृतधातूपात्तव्यापाराश्रयकर्तृग्रहणेन सार्थक्यात् । अन्यथा माषेष्वतिप्रसक्तमश्वं माषविनाशो मा भूदिति हेतोरन्यत्र बध्नातीत्यर्थके 'माषेष्वश्वं बध्नाति' इत्यत्र माषभक्षणकर्तुरश्वस्य मद्वृत्तिव्यापारप्रयोज्यगलबिलाधःसंयोगरूपफलाश्रयमाषाभन्त्वितीच्छायाः सत्वादधिकरणसंज्ञां बाधित्वा माषाणां कर्मत्वापत्तेः । प्रकृतधातूपात्तव्यापाराश्रयकर्तृग्रहणे तु नोक्तदोषः, अश्वस्य प्रकृतधातूपात्तव्यापाराश्रयत्वाऽभावेनाऽग्रहणात् ।

( ख ) **कर्तुः किमिति**—ननु कारकाधिकारात् कारकवृत्तिव्यापारप्रयोज्यं यत्फलं तादृशफलवत्त्वप्रकारिकेच्छानिरूपितविषयताश्रयः कारकं सत् कर्मसंज्ञं भवतीत्यर्थेनैव 'हरिं भजति' इत्यादौ कर्मत्वे सिद्धे कर्तुः ग्रहणं किमर्थमिति चेन्न, माषेषु

प्रसक्तमश्वं माषविनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थके 'माषेष्वश्वं बध्नाति' इत्यत्र अश्ववृत्तिव्यापारप्रयोज्यगलाधःसंयोगाश्रयत्वेन माषाणां कर्मत्वापत्तेः। कृते च तस्मिन् कर्तृग्रहणसामर्थ्यात् प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयस्यैव कर्तुर्ग्रहणेनादोषात्।

**तमब्ग्रहणं किम्** (ई० ३०, ४७, ५३)—अवयवद्वारा समुदाये प्रश्नः–'कर्तुरुद्देश्यं कर्म' इत्येव सिद्धे ईप्सिततमग्रहणं किमर्थमिति चेन्न, यदा कृतभोजनोऽपि देवदत्तः पयोलोभेन पुनरोदनभोजने प्रवर्तते तदा 'पयसा ओदनं भुङ्क्ते' इत्यत्र पयसः कर्मत्वापत्तेः। नचैवमपि ईप्सितमित्येव सिद्धे तमब्ग्रहणं व्यर्थमिति वाच्यम्, 'अग्नेर्माणवकं वारयति' इत्यत्र वारिधातुवाच्यसंयोगरूपफलाश्रयत्वेन अग्नेरपि कर्मत्वापत्तौ 'वारणार्थानामीप्सितः' इत्यस्य अनवकाशतया माणवकादपि पञ्चम्यापत्तेः। कृते तु तस्मिन् ईप्सिततमे अस्य प्रवृत्तिरिति। 'पयः पिबति' इत्यादौ तु पयसः ईप्सिततमत्वेन कर्मसंज्ञा भवत्येवेति दिक्।

**हरिं भजति** (ई० ४८, ५०)—अत्र हरिशब्दस्य 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण भजकर्तृवृत्तिक्रियाजन्यप्रीतिरूपफलाश्रयत्वेनेच्छोद्देश्यतया कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन 'द्व्येकयोः–' इत्येकवाक्यतया द्वितीयैकवचनेऽमि पूर्वरूपे 'हरिम्' इति सिद्धम्।

**हरिः सेव्यते**—अत्र हरिशब्दस्य सेवकवृत्तिसेवारूपक्रियाजन्यप्रीतिरूपफलाश्रयत्वेन–इच्छोद्देश्यतया 'कर्तुरीप्सित–' इति कर्मत्वेऽपि तस्य 'सेव्यते' इति कर्मतिङाऽभिहितत्वेन 'अनभिहिते' इत्यधिकारेण द्वितीयाप्रवृत्तौ हरित्व-हरि-पुंस्त्वरूपाणां त्रयाणामेवाऽर्थानां प्रतिपादने 'प्रातिपदिकार्थ–' इति सूत्रेण प्रथमैवेति 'हरिः सेव्यते' इति सिद्धम्।

**ग्रामं गच्छँस्तृणं स्पृशति** (ई० ४४)—अत्र स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाभावेऽपि 'गङ्गां स्पृशति' इत्यादौ स्पृश्यमानस्य ईप्सिततमस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मकफलाश्रयत्वात् 'तथायुक्तं चानीप्सितम्' इत्यनेन कर्मत्वात् 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति। ग्रामस्य तु 'कर्तुरीप्सिततमं कर्म' इत्यनेन कर्मत्वं बोध्यम्।

**ओदनं भुञ्जानो विषं भुङ्क्ते** (ई० ४१, ४८, ५०)—अत्र विषस्य द्वेष्यतया ईप्सिततमत्वाभावेपि 'ओदनं भुङ्क्ते' इत्यादौ भुज्यमानस्य ईप्सिततमस्य ओद-

नादेरिव क्रियाजन्यगलविवरप्रवेशात्मकफलाश्रयत्वात् 'तथायुक्तं चानीप्सितम्' इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति। ओदनस्य तु 'कर्तुरीप्सिततमं कर्मे'ति कर्मत्वं ज्ञेयम्।

**अकथितञ्च** ( ई० ३० )—अपादानत्वादिविशेषात्मना न विवक्षितं, किन्तु सम्बन्धसामान्यात्मनैव, तद्वा तत्कर्मसंज्ञकमिति सूत्रार्थः। न चैवमपादानस्य सम्बन्धित्वेन विवक्षितत्वात् सर्वत्र कर्मसंज्ञाऽपत्तिः स्यादिति चेदत्र वार्तिककृता श्लोकेन परिगणितम् 'दुह्–याच–पच्–दण्ड्' इत्यादिना मूले। उदाहरणानि चात्र–गां दोग्धि पयः, गोः सकाशात् पयः क्षारयतीत्यर्थः। अत्र क्षरणे गोरपादानत्वात् प्राप्तां पञ्चमीं बाधित्वा 'अकथितञ्चेति' कर्मत्वे द्वितीया। 'बलिं याचते वासुधाम्' बलिकर्तृकं वासुधाकर्मकं दानं प्रार्थयते इत्यर्थः। अत्र कर्तुः कर्मत्वविवक्षायां द्वितीया। यद्वा बलिसम्बन्धिवसुधाकर्मकयद्दानं तात्प्रार्थयते इत्यर्थः। गर्गान् शतं दण्डयति। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम्। अपादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया।

**गां दोग्धि पयः** ( ई० ४८ )—गोः सकाशात् पयः क्षारयतीत्यर्थः। अत्र क्षरणे गोरपादानत्वात् प्राप्तां पञ्चमीं बाधित्वा 'अकथितञ्चे'ति कर्मत्वे 'कर्मणि द्वितीया' इति द्वितीया भवति। पयसस्तु 'कर्तुरीप्सिततमं कर्मे'ति कर्मत्वं बोध्यम्।

( क ) **बलिं याचते वसुधाम्** ( ई० ३२, ३४, ४८ )—अत्र बलेरित्यस्य 'अकथितञ्च' इत्यनेन कर्मत्वात् द्वितीया। बलिकर्तृकंवसुधाकर्मकं दानं प्रार्थयते, इत्यर्थः।

( ख ) **बलिं याचते वसुधाम्**—अत्र दुहादिद्वादशानां न्यादिचतुर्णां च धातूनां कर्मणा युक्तमपादानादिविशेषैरविवक्षितं क्रियान्वयिमात्रं कारकसंज्ञं सत् कर्मसंज्ञकं भवतीत्यर्थकेन 'अकथितञ्च' इति सूत्रेण याचधातोः कर्मणा वसुधया स्वस्वामिभावसम्बन्धेन युक्तस्य बलेरपादानादिकारकविशेषैरविवक्षणेन क्रियान्वयमात्रविवक्षायां कर्मसंज्ञायां वसुधायाश्च याचकवामनवृत्तियाचनक्रियाजन्यपरस्वत्वनिवृत्ति–स्वस्वत्वोत्पत्ति–इच्छारूपफलाश्रयत्वेन–इच्छोद्देश्यतया 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीयाविभक्तौ तत्साधु। बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयत इत्यर्थः।

**अविनीतं विनयं याचते** (ई० ४२, ४४, ४९, ५२)—अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयत इत्यर्थः। अत्र 'अकथितञ्च' इत्यनेन कर्तुः कर्मत्वविवक्षायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति। विनयस्य तु 'कर्तुरीप्सिततमं कर्मे'ति कर्मत्वं बोध्यम्।

**व्रजमवरुणद्धि गाम्** (ई० ५०, ५१, ५३)—गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया 'अकथितञ्च' इति कर्मत्वविवक्षायां 'कर्मणि द्वितीया' इति द्वितीया भवतीति विशेषः।

**वृक्षमवचिनोति फलानि** (ई० ४९)—वृक्षात् प्रच्याव्य फलान्यादत्ते इत्यर्थः। अत्र प्रच्याव्यादानविषयत्वात् फलानि प्रधानकर्म, प्रच्यवावधित्वाद् वृक्षोऽपादानम्। तस्य अपादानमुपेक्ष्य 'अकथितञ्च' इति कर्मत्वविवक्षायां 'कर्मणि द्वितीया' इति द्वितीया भवति।

**माणवकं धर्मं ब्रूते** (ई० ४८)—माणवकाय धर्मं बोधयतीत्यर्थः। व्यापारप्रयोज्यबोधविषयत्वाद् धर्मः प्रधानकर्म। बोधविषयेण कर्मणाऽभिप्रेयमाणत्वात् माणवकः सम्प्रदानम्। तस्य सम्प्रदानत्वमुपेक्ष्य 'अकथितञ्च' इत्यनेन कर्मत्वविवक्षायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति।

**सुधां क्षीरनिधिं मथ्नाति** (ई० ५४)—क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः। अत्र सुधा प्रधानकर्म, क्षीरोदधिस्तु उद्भवं प्रत्यपादानम्। तस्य 'अकथितञ्च' इत्यनेन कर्मत्वविवक्षायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति।

**छात्रं पाठशालां नयति** (ई० ३७)—अत्र 'अकथितञ्च' इत्यनेन अकथितस्याऽपि कर्मसंज्ञायां नयतेः द्विकर्मकत्वात् मुख्ये कर्मणि पाठशालायां, गौणे कर्मणि छात्रे च 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति।

**बलिं भिक्षते वसुधाम्** (ई० ४५)—'अहमपीदमचोद्यं चोद्ये' इति 'तद्राजस्य बहुषु' इति सूत्रस्थभाष्यात् **'अर्थनिबन्धनेयं संज्ञा'** इति ज्ञायते। तथा च दुह्याद्यर्थकधात्वन्तरयोगेऽपि द्विकर्मकत्वं लभ्यते। तेन 'बलिं भिक्षते वसुधाम्' इत्यादावपि 'अकथितं च' इत्यनेन गौणे कर्मणि द्वितीया भवति।

नव्यास्तु परिगणितातिरिक्तानां येषां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वेन

'कर्तुः'रित्येव कर्मत्वमिति वदन्ति। अत एव 'दुहि-याचि-रुचि-प्रच्छि-भिक्षि-चिञाम्' इति भाष्योक्तपरिगणनेन भिक्षिग्रहणं चरितार्थमिति दिक्।

**कुरून् स्वपिति** (ई० ३९, ५१)—कुरुषु निद्रां करोतीत्यर्थः। कुर्वादेरनुद्देश्यत्वादत्र 'कर्तु'रित्यनेन कर्मत्वाभात् 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति वार्तिकेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति। ग्रामसमूहात्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, नतु ग्रामादिरपि। तेन 'ग्रामे स्वपति' इत्यत्र न द्वितीया।

**क्रोशमास्ते** (ई० ४९)—अत्र 'कालाध्वनोः-' इति वार्तिकेन कर्मत्वात् 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति। अत्र वार्तिके गन्तव्यत्वेनाऽध्वनो विशेषित्वात् नियतपरिमाणः क्रोशादिरेव गृह्यते। तेन 'अध्वन्यास्ते' इत्यत्र द्वितीया न भवति।

**गतिबुद्धि** (ई० ३०)—गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यादिति सूत्रार्थः। 'शत्रूनगमयत् स्वर्गम्' इत्याद्युदाहरणानि। शत्रवः स्वर्गमगच्छन् हरिस्तान् प्रैरिरदिति-शत्रूनगमयत् स्वर्गम्। गत्यर्थस्योदाहरणमिदम्। स्वे = स्वकीयाः, वेदार्थमविदुः तान् हरिः वेदार्थमवेदयदिति-वेदार्थं स्वानवेदयत्। बुद्ध्यर्थस्योदाहरणमिदम्। देवाः अमृतमाश्नन्, तान् हरिः आशयदिति आशयच्चामृतं देवान्। प्रत्यवसानार्थस्योदाहरणमिदम्। विधिः वेदमधीतवान्, तं हरिः अध्यापयदिति-'वेदमध्यापयद्विधिम्'। शब्दकर्मणः उदाहरणमेतत्। सलिले पृथ्वी आस्ते, तां हरिः आसयदिति-'आसयत् सलिले पृथ्वीम्'। अकर्मकस्योदाहरणमेतत्। (यः स मे श्रीहरिर्गतिरिति प्रतिवाक्यमन्वयः)।

**शत्रूनगमयत् स्वर्गम्** (ई० ४७, ४९)—'गतिबुद्धि-, सूत्रस्य गत्यर्थस्योदाहरणमिदम्। शत्रवः (युद्धे मृताः) स्वर्गमगच्छन्, तान् हरिः प्रैरिरदिति-हरिः शत्रून् स्वर्गमगमयत्। शत्रुनिष्ठं यद् गमनं तदनुकूलो यन्निष्ठो व्यापारः स हरिर्मे गतिरस्तु इति वाक्यार्थः। ननु शत्रूनगमयदित्यादौ 'कर्तुः-' इति सूत्रेणैव कर्मत्वे सिद्धे 'गतिबुद्धि-' इति सूत्रं व्यर्थमिति चेन्न, 'णिजर्थव्यापारप्रयोज्यफलाश्रयाणां यदि कर्मत्वं स्यात् तर्हि गत्याद्यर्थकानामेव' इति नियमार्थत्वात्। तेन 'पाचयत्योदनं देवदत्तेन यज्ञदत्तः' इत्यादौ देवदत्तस्य कर्मत्वं नेति।

**वेदमध्यापयद्विधिम्** ( ई० ४८, ५१ )—'गतिबुद्धि-' सूत्रस्थशब्दकर्मणः उदाहरणमेतत् । विधिः = ब्रह्मा, वेदमधीतवान्, तं हरिः अध्यापयादित्यर्थः । अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम् ।

**आसयत् सलिले पृथ्वीम्** ( ई० ५० )—'गतिबुद्धि-' सूत्रस्थाऽकर्मकस्योदाहरणमिदम् । सलिले पृथ्वी आस्ते, तां हरिः आसयदित्यर्थः । अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम् ।

**नाययति वाहयति वा भारं भृत्येन** (ई० ३५, ५०)—भृत्यो भारं नयति वहति वा, तं प्रेरयतीत्यर्थः । अत्र 'नीवह्योर्न' इति वार्तिकेन निषेधात् भृत्यस्य 'गतिबुद्धि-' इति कर्मत्वं न भवति ।

**दर्शयति हरिं भक्तान्** ( ई० ४६, ५३ )—हरिं भक्ताः पश्यन्ति तान् गुरुः प्रेरयतीत्यर्थः । अत्र 'दृशेश्च' इति वार्तिकेन अण्यन्तकर्तुः कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति । नन्वत्र बुद्ध्यर्थत्वादेव कर्मत्वे सिद्धे 'दृशेश्चे'ति वार्तिकं किमर्थमिति चेन्न, 'गतिबुद्धि-' इति सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामिति ज्ञापनार्थत्वात् । तेन स्मारयति घ्रापयति देवदत्तेनेत्यत्र कर्मत्वं नेति ।

**मासमासयति देवदत्तम्** ( ई० ३१, ४४ )—अयम्भावः, धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इत्युक्त्या अविवक्षितकर्मत्वेन अकर्मकत्वात् 'पाचयति देवदत्तेन' इत्यत्र कर्मत्वं कुतो नेति चेन्न, अकर्मकग्रहणसामर्थ्यात् **'येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राऽकर्मकाः, नत्वविवक्षितकर्माणोऽपि'** इत्यर्थबोधनेनादोषात् । तेन 'मासमासयति देवदत्तम्' इत्यत्र कर्मत्वं भवति । देवदत्तेन पाचयति' इत्यादौ तु नेति दिक् ।

**अधितिष्ठति वैकुण्ठं हरिः** ( ई० ५५ )—अत्र 'अधिशीङ्स्थासां कर्म' इति सुत्रेण कर्मसंज्ञायां कर्मणि द्वितीया' इत्यनेन द्वितीया भवति । अधिस्त्वत्र सप्तम्यर्थस्याधारस्य द्योतकः । वैकुण्ठे हरिः तिष्ठतीत्यर्थः ।

**उपवसति, अधिवसति वा वैकुण्ठं हरिः** ( ई० ३६, ५१ )—'उपान्वध्याङ्वसः' इत्यनेनात्र कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया भवति । वैकुण्ठे हरिः वसतीत्यर्थः । उपसर्गावत्राधारद्योतकाविति ।

**वने उपवसति** (ई० ३६)—अत्र 'अभुक्त्यर्थस्य ने'ति वार्तिकनिषेधात् कर्मत्वन्नेति।

**सर्वतः कृष्णम्** ( ई० ४९ )—कृष्णस्य सर्वेषु पार्श्वेषु गोपाः इत्यर्थः। अत्र 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।' इति श्लोकवार्तिकेन द्वितीया भवति।

**उभसर्वतसोरिति**—उभशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति, धिक्शब्दस्य प्रयोगे सति, कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु ततः उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीयेत्यर्थः।

**धिक् कृष्णाभक्तम्**(ई० ४८)—धिक् निन्दायाम्। कृष्णाऽभक्तस्य निन्देत्यर्थः। अत्र 'उभसर्वतसोः–' इति द्वितीया भवति।

**उपर्युपरि लोकं हरिः** (ई० ५१)—'उपर्यध्यधस्सामीप्ये' इति द्विर्वचनम्। लोकस्य समीपे उपरि हरिरस्तीत्यर्थः। 'उभसर्वतसोः–' इत्यनेनात्र द्वितीया।

**ग्रामं समया** ( ई० ४७ )—ग्रामस्य समीपे इत्यर्थः। 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि' इति वार्तिकेनात्र द्वितीया। ततोऽन्यत्रापि दृश्यते' इति प्रागुक्तस्यैव प्रपञ्चोऽयं वार्तिकः।

**अन्तरा त्वां मां हरिः** ( ई० ४९ )—तव मम च मध्ये हरिरित्यर्थः। 'अन्तराऽन्तरेण युक्ते' इति सूत्रेणात्र द्वितीया भवति।

**जपमनु प्रावर्षत्** ( ई० ३३, ४०, ४५, ५४ )—कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम्। अत्र 'अनुर्लक्षणे' इत्यनेन कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन द्वितीयायां जपमनु इति वाक्यघटकजपमित्यस्य सिद्धिः। सम्बन्धश्चात्र लक्ष्यलक्षणभावः।

**लक्षणत्वञ्च**—'ज्ञानजनकज्ञानविषयत्वम्'। लक्ष्यत्वञ्च—'ज्ञानजन्यज्ञानविषयत्वम्' ज्ञानं वर्षणज्ञानं तज्जनकं ज्ञानं जपज्ञानं तद्विषयता जपे। ज्ञानं जपज्ञानं तज्जन्यं ज्ञानं वर्षणज्ञानं तद्विषयता वर्षणे इति लक्षणसमन्वयः। ननु यदैव ब्राह्मणद्वारा जपो जातस्तदैव देवकर्तृकं वर्षणमपि जातमिति वर्षणे जपो हेतुर्भवति, तथा च 'हेतौ' इति परत्वात् तृतीया स्यादिति चेन्न, 'लक्षणेत्थम्–' इत्यादिना कर्मप्रवचनीयसंज्ञाविधानेन सिद्धे पुनः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्। नच विजातीयया

संज्ञया तृतीयायाः विभक्तेर्बाधः कर्तुं न शक्यः इति वाच्यम्, संज्ञाविधानबोधितद्वितीयाविधानसामर्थ्यात्।

**उप हरिं सुराः** ( ई० ३९ )—हरेर्हीनाः इत्यर्थः। अत्र 'उपोऽधिके च' इत्यनेन कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति।

**भक्तो विष्णुं प्रति** ( ई० ४२, ४३ )—अत्र लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति सूत्रेण प्रतीत्यस्य कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन द्वितीया भवति। विष्णुविषयकभक्तिमानित्यर्थः। इत्थम्भूताख्यानस्योदाहरणमेतत्।

**लक्ष्मीर्हरिं प्रति** ( ई० ३८ )—अत्र 'लक्षणेत्थम्–' इत्यनेन प्रतेः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति। भागस्योदाहरणमिदम्। स्वामित्वं द्वितीयार्थः, प्रत्यादिद्योत्यः। तदुक्तं मूले हरेर्भाग इत्यर्थः।

**वृक्षं वृक्षं प्रति** ( ई० ३८ )—अत्र 'लक्षणेत्थम्–' इति सूत्रेण वीप्सार्थे प्रतेः कर्मप्रवचनीयसंज्ञायां तद्योगे द्वितीया भवति। नच सेचने वृक्षस्य कर्मत्वादेव द्वितीया सिद्धेः किमिह कर्मप्रवचनीयसंज्ञयेति चेत् सत्यम्, कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञायाः बाधात् 'उपसर्गात् सुनोति–' इति षत्वचारणाय तस्यावश्यकत्वात्। द्वित्वन्तु 'नित्यवीप्सयोः' इत्यनेन बोध्यम्। वृक्षं वृक्षं प्रति सिञ्चति=कृत्स्नं वृक्षं सिञ्चतीत्यर्थः।

**अति देवान् कृष्णः** ( ई० ३५, ३६, ५३ )—लोकसंरक्षणविषये देवेभ्योऽधिकः कृष्णः इत्यर्थः। देवानां पूज्य इति वार्थः। अत्र 'अतिरतिक्रमणे च' इत्यनेन कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति।

( क ) **सर्पिषोऽपि स्यात्** ( ई० ३५ )—सर्पिरवयवबिन्दुरपि स्यादित्यर्थः। स्यादिति सम्भावनायां लिङ्, अपिशब्दस्य कर्तृदौर्लभ्यप्रयुक्तदौर्लभ्यत्वसम्बन्धेन स्यात् क्रियया सह सम्बन्धः। अप्रयुज्यमानबिन्दुरूपार्थमपिशब्दो द्योतयतीति बिन्दुना योगे सर्पिषः इत्यवयावयविभावसम्बन्धे षष्ठी। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वं कर्मप्रवचनीययुक्तत्वम्' इति लक्षणेन सम्बन्धस्य प्रतियोगी बिन्दुरेव न तु सर्पिरिति सर्पिष्शब्दात् द्वितीया नेति।

( ख ) **सर्पिषोऽपि स्यात्** ( ई० ५५ )—अप्रयुज्यमानपदस्यार्थः पदार्थः, इत्यपिशब्दस्य बिन्दुद्योतकत्वेन पदार्थद्योतकत्वात् 'अपिः पदार्थसम्भावनाऽन्ववसर्ग-

गर्हासमुच्चयेषु' इति सूत्रेण कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञायाः बाधात् स्यादित्यत्र 'उपसर्गात्सुनोति-' इति षत्वं न। अत्र सम्भावनायां लिङ्। सम्भावना-उत्प्रेक्षा, आशङ्का च। तथा च सर्पिरिवयवविन्दुकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवती सम्भावनाविषया सत्तेति वाक्यार्थः। अत्र स्वकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवत्त्वसम्बन्धोऽपि द्योत्यः। सर्पिषः इत्यत्र बिन्दोरवयवावयविभावसम्बन्धे षष्ठी। द्वितीया तु न कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगिवाचकादेव तद्विधानात्।

**अपिस्तुयाद् विष्णुम्** ( ई० ४८ )—सम्भावनद्योतकस्याऽपिशब्दस्योदाहरणमेतत्। स्यादित्यत्र 'सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे' इति लिङ्। 'उपसर्गात् सुनोति' इति षत्वन्तु न, 'अपिःपदार्थ-' इति कर्मप्रवचनीयत्वे उपसर्गत्वबाधात्। अवाङ्मनसगोचरं विष्णुमपि स्तुयादित्यर्थः। अत्युक्तिरियम्, अवाङ्मनसगोचरस्य विष्णोः केनापि स्तोतुमशक्यत्वात्।

**अपि स्तुहि** ( ई० ३१ )—अन्ववसर्गद्योतकस्याऽपिशब्दस्योदाहरणमेतत्। अन्ववसर्गः कामचारानुज्ञा। विष्णुं स्तुहि वा, न वा, यथेष्टं कुर्वित्यर्थः। स्तुहीत्यत्र 'प्रेषातिसर्ग-' इति लोट्। 'उपसर्गात् सुनोति-' इति षत्वं तु न 'अपिःपदार्थ-' इति कर्मप्रवचनीयत्वे उपसर्गत्वबाधात्।

**मासं कल्याणी** ( ई० ५० )—'कालाध्वनोरत्यन्तसंयोगे' इत्यस्य गुणक्रियाद्रव्यैः कालाध्वनोरत्यन्तसंयोगे द्वितीया स्यादित्यर्थः। सा च कालाध्वभ्यामेव भवति श्रुतत्वात्। ततश्च गुणात्यन्तसंयोगस्योदाहरणमेतत्। त्रिंशद्दिनात्मके कालेऽविच्छिन्नमङ्गलवानित्यर्थः।

## अथ तृतीया विभक्तिः

( क ) **तमब्ग्रहणं किं गङ्गायां घोषः** ( ई० ३४, ३६, ४५, ४८ )—अयम्भावः, करणमिति महासंज्ञया साधके लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति 'साधकतमं करणम्' इति सूत्रे तमब्ग्रहणं व्यर्थमिति चेन्न, 'अस्मिन् कारकाधिकारे शब्दसमर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञापनार्थत्वात्। तेन 'गङ्गायां घोषः' इत्यत्र गौणाधारेऽपि सप्तमी सिद्धा। अन्यथा अधिकरणमिति महासंज्ञयैव आधारे लब्धे आधारग्रहणात् सर्वावयवव्याप्त्या य आधारस्तस्यैव ग्रहणापत्तौ तिलेषु तैलम्, दध्नि सर्पिः, इत्यादावेव सप्तमी स्यान्नतु गङ्गायां घोषः इत्यादौ। अत्र गङ्गापदस्य तत्तीरे लक्षणा बोध्या।

(ख) **तमब्ग्रहणं किमिति** (ई० ३५)—अयम्भावः, कारकाधिकारात् करणमिति (क्रियतेऽनेनेति) ल्युडन्तमहासंज्ञया च साधकार्थे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति तमब्ग्रहणं व्यर्थं सत् 'अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञापयति। एवञ्च तमब्ग्रहणाभावेऽतिशयरूपार्थलाभो न स्यादिति तमब्ग्रहणं स्वांशे चरितार्थम्। फलञ्च 'गङ्गायां घोषः' इत्यत्र गौणाधारेऽपि सप्तम्याः सिद्धिः। अन्यथा अधिक्रियते स्थाप्यते यत्रेति ल्युडन्तव्युत्पत्त्यैव आधारपदार्थे सिद्धे आधारपदं व्यर्थं सत् 'सर्वावयवव्याप्त्या य आधारस्तस्यैवाऽधिकरणसंज्ञा स्यादिति 'तिलेषु तैलम्' इत्यादावेव सप्तमी स्यात्, न तु प्रकृते, इति दिक्।

(ग) **तमब्ग्रहणं किं, गङ्गायां घोषः** (ई०५०, ५२)—अयम्भावः, क्रियतेऽनेनेति करणमिति महासंज्ञयैव क्रियासाधकरूपार्थलाभसम्भवे 'साधकतमं करणम्' इति सूत्रे पुनः क्रियमाणं साधकग्रहणं साधकतमार्थं भविष्यतीति, एवं च सूत्रे तमब्ग्रहणं व्यर्थमिति प्रश्नाशयः। उत्तराशयस्त्वेवम्-तमब्ग्रहणं व्यर्थं सज्ज्ञापयति-कारकप्रकरणेऽन्वर्थसंज्ञाबललब्धोऽर्थो नाश्रीयते इति। तेन अस्मिन् सूत्रे करणमिति महासंज्ञाबललभ्यार्थस्याऽनाश्रयणेन साधकपदं केवलसाधकस्यैव ग्राहकं न तु प्रकृष्टसाधकरूपार्थस्येति, तदर्थलाभाय सूत्रे तमब्ग्रहणमावश्यकमिति स्वांशे चारितार्थ्यम्। फलन्त्वन्यत्र 'गङ्गायां घोषः' इति। 'आधारोऽधिकरणम्' इत्यत्र अधिक्रियतेऽस्मिंस्तदधिकरणमिति महासंज्ञयाऽधिकरणरूपार्थलाभे सूत्रे पुनः क्रियमाणमाधारग्रहणं सर्वावयवव्याप्त्या आधारस्यैव ग्रहणार्थं स्यादिति 'तिलेषु तैलम्' 'दध्नि सर्पिः' इत्यादावेव अधिकरणसंज्ञा स्यात्, न तु एकदेशावच्छेदेन घोषाधारगङ्गायाः इति 'गङ्गायां घोषः' इत्यत्र सप्तमी न स्यात्। ज्ञापिते तूक्तार्थे अन्वर्थसंज्ञाबललभ्यार्थानाश्रयणेन सर्वविधाधारस्य तेनाधिकरणसंज्ञाविधानेन गङ्गायाः अप्यधिकरणसंज्ञायां 'सप्तम्यधिकरणे च' इति सप्तमी सिद्ध्यति।

**रामेण बाणेन हतो वाली**—अत्र वालिवधानुकूला धनुराकर्षणादिरूपा क्रिया हन्धात्वर्थः तत्र स्वातन्त्र्येण विवक्षितत्वाद् रामस्य 'स्वतन्त्रः कर्ता' इत्यनेन कर्तृसंज्ञा, बाणनिष्ठा क्रिया लक्ष्यवेधनं, तदव्यवधानेन वालिवधसिद्धेर्विवक्षिततया बाणस्य 'साधकतमं करणम्' इत्यनेन करणसंज्ञा, ततश्च 'कर्तृकरणयोस्तृतीया' इत्यनेनोभयत्र तृतीयायां तत्सिद्धिः।

**समेनैति, विषमेणैति** ( ई० ३७, ३९ )—समं विषमं वा गमनं करोतीत्यर्थः। उभयत्र 'कर्मणि द्वितीया' प्राप्ता तां प्रबाध्य 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीया भवति।

**अक्षैरक्षान् वा दीव्यति** ( ई० ३०, ३६, ४२, ४३ )—अत्र 'दिवः कर्म च' इति सूत्रेण दिवः साधकतमस्याऽक्षस्य कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीयायां सत्याम् 'अक्षान् दीव्यति' इति भवति। चात्करणसंज्ञायां सत्यां तु 'कर्तृकरणयोस्तृतीया' इत्यनेन तृतीयायाम् 'अक्षैर्दीव्यति' इति च भवति।

**अह्नानुवाकोधीतः** ( ई० ४४ )—अह्नि वा निरन्तरमनुवाकोऽध्ययनेन गृहीत इत्यर्थः। अत्र 'अपवर्गे तृतीया' इत्यनेन तृतीया भवति।

**पुत्रेण सहागतः पिता** ( ई० ५१, ५३ )—'सहयुक्तेऽप्रधाने' इति सूत्रेण अत्र तृतीया भवति। पितुरत्रागमनक्रियासम्बन्धः शाब्दः। पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याप्राधान्यम्।

**अक्ष्णा काणः** ( ई० ४६, ४८, ५०, ५१, ५५ )—अत्र 'येनाङ्गविकारः' इति सूत्रेण तृतीया भवति। काणशब्दोऽत्र काणत्ववति वर्तते। सम्बन्धश्चात्र तृतीयार्थः। अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः। अक्षिविकारप्रयुक्तकाणत्ववानिति यावत्।

**जटाभिस्तापसः** ( ई० ४७, ५०, ५४ )—'इत्थं भूतलक्षणे' इति सूत्रेणाऽत्र तृतीया भवति। लक्ष्यलक्षणभावोऽत्र तृतीयार्थस्तदेव प्रतिपादयति मूले—जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः। न च ज्ञाने करणत्वादेव तृतीया सिद्धेति वाच्यम्, करणत्वाऽविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थत्वादिति।

**पित्रा पितरं वा सञ्जानीते** ( ई० ३४ )—सम्यक् जानीत इत्यर्थः। 'संज्ञोऽन्यतरस्यां कर्मणि' इति सूत्रेणाऽत्र वैकल्पिकतृतीया भवति।

( क ) **अध्ययनेन वसति** ( ई० ४१, ४५, ४८ )—अत्र 'हेतौ' इति सूत्रेण तृतीया भवति। नचात्र अध्ययनस्य गुरुकुलवासम्प्रति न हेतुत्वं प्रत्युत अध्ययनस्यैव वाससाध्यत्वमिति चेन्न, 'फलमपि हेतुरि'ति मूले उक्तत्वात्। तादर्थ्यविवक्षायां तु 'अध्ययनाय वसति' इत्यपि भवितुमर्हतीति तत्त्वविदः।

( ख ) **अध्ययनेन वसति** ( ई० ५२ )—अध्ययनस्य वासफलत्वेऽपि ज्ञानद्वारा क्रियाजनकत्वेन हेतुत्वात् 'हेतौ' इति सूत्रेण अत्र तृतीया भवति। अध्ययनहेतुको देवदत्तादिकर्तृको वास इत्यर्थः।

## अथ चतुर्थी विभक्तिः

**विप्राय गां ददाति** ( ई० ४९ )—विप्रमुद्दिश्य गां ददातीत्यर्थः। अत्र 'कर्मणा यमभिप्रेति स सम्प्रदानम्' इति सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति।

**पत्ये शेते** ( ई० ३६ )—पतिमुद्दिश्य शेत इत्यर्थः। अत्र 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इति वार्तिकेन सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति। नन्वेवम् 'ओदनं पचति' इत्यत्रापि सम्प्रदानत्वात् चतुर्थी कुतो नेति चेन्न, अकर्मकस्थले सावकाशायाः सम्प्रदानसंज्ञायाः सकर्मकस्थले कर्मसंज्ञया बाधात्

**पशुना रुद्रं यजते** (ई० २५, ४८, ५५)—पशुं रुद्राय ददातीत्यर्थः। अत्र 'यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' इति वार्तिकेन कर्मणः पशोः करणसंज्ञायां सम्प्रदानस्य रुद्रस्य च कर्मसंज्ञायां क्रमेण तृतीयाद्वितीये भवतः।

**हरये रोचते भक्तिः** ( ई० ५१, ५३ )—भक्तिः स्वविषयां प्रीतिं हरौ जनयतीत्यर्थः। अत्र भक्तिगतव्यापारप्रयोज्यप्रीत्याश्रयत्वात् हरेः कर्मत्वं प्राप्तं तम्प्रबाध्य 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वात् चतुर्थी भवति। नन्वेवं 'हरिर्भक्तिमभिलष्यतीत्यत्राऽपि रुच्यर्थत्वात् सम्प्रदानत्वं कुतो नेति चेन्न, अभिलष्यतिकर्त्रपेक्षया यदन्यदभिलष्यति कर्म तत्कर्तृकस्यैव रुच्यर्थकस्य ग्रहणेनादोषात्। अत एवोक्तं मूले हरिनिष्ठप्रीतेर्भक्तिः कर्त्रीति।

**अन्यकर्तृकोऽभिलाषो रुचिः** ( ई० ४०, ४६, ४९ )—'रुच्यर्थानां प्रीयमाणः' इति सूत्रे 'अन्यकर्तृकोऽभिलाषो रुचिः'। अर्थात् अन्यो नाम अभिलष्यतिकर्म तत्कर्ता यस्य स अन्यकर्तृकः, एवम्भूतोऽभिलाषो रुच्धात्वर्थः, इत्यर्थः। एवं च 'हरये रोचते भक्तिः' इत्यत्र रुच्धातुयोगे भक्तिपदं कर्तृ भवति। हरिर्भक्तिमभिलष्यति' इत्यत्र तु अभिपूर्वकलष्धातुयोगे भक्तिपदं कर्म भवतीति नोभयत्र विरोधेति दिक्।

**भक्ताय धारयति मोक्षं हरिः**—अत्र भक्तस्य तुलसीदलादिद्रव्यदातृत्वेन उत्तमर्णत्वात् 'धारेरुत्तमर्णः' इति सूत्रेण सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी।

**पुष्पेभ्यः स्पृहयति** ( ई० ४४ )—अत्र 'स्पृहेरीप्सितः' इति सूत्रेण ईप्सितमात्रे सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी। प्रकर्षविवक्षायां तु 'कर्तुरीप्सिततमं कर्मे'ति परत्वात् कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीयायां सत्यां 'पुष्पाणि स्पृहयति' इत्यपि भवति।

**हरये क्रुद्ध्यति** ( ई० ३८ )—हरिविषयकं कोपं करोतीत्यर्थः। अत्र 'क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपः' इत्यनेन सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति।

**क्रूरमभिक्रुद्ध्यति** ( ई० ३९, ४०, ४७ )—अत्र 'क्रुधद्रुह' इति सूत्रेण प्राप्तसम्प्रदानसंज्ञां प्रबाध्य 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति।

**कृष्णाय राध्यति ईक्षते वा** ( ई० ४३ )—अत्र 'राधीक्ष्योर्यस्य विप्रश्नः' इति सूत्रेण सम्प्रदानत्वात् चतुर्थी भवति।

**विप्राय गां प्रतिशृणोति** (ई० ४१, ५१)—विप्रेण मह्यं गवादिद्रव्यं देहीति प्रवर्तितस्तत्प्रतिजानीत इत्यर्थः। अत्र 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति।

**होत्रेऽनु गृणाति** ( ई० ५१ )—होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः। अत्र 'अनुप्रतिगृणश्च' इति सम्प्रदानत्वात् चतुर्थी भवति।

**क्लिपि सम्पद्यमाने च** (ई० ३८)—क्लिपि धातौ प्रयुज्यमाने सति सम्पद्यमानेऽर्थे वर्तमानात् चतुर्थी वाच्येत्यर्थः। तेन 'भक्तिर्ज्ञानाय कल्पते' इत्यादौ चतुर्थी सिद्ध्यति।

**क्रियार्थोपपदस्य च** ( ई० ४१ )—क्रिया अर्थः प्रयोजनं यस्य सा क्रियार्था, सा क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यादित्यर्थः। 'फलेभ्यो याति' इत्युदाहरणम्। फलान्याहर्तुं यातीत्यर्थः।

**फलेभ्यो याति** ( ई० ४२, ४९, ५२ )—फलान्याहर्तुं यातीत्यर्थः। अत्र फलाहरणक्रियार्था यानक्रिया, तद्वाचके उपपदे आहर्तुमित्यध्याहारलभ्यतुमुन्नन्तार्था-

हरणक्रियां प्रति फलानां कर्मत्वात् 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण द्वितीयां प्रबाध्य चतुर्थी भवति ।

**नमस्कुर्वो नृसिंहाय** (ई० ४६)—नृसिंहमनुकूलयतुमित्यर्थः। अत्र 'क्रियार्थोपपदस्य चे'ति चतुर्थी। 'नमःस्वस्ति–' इति सूत्रेणात्र चतुर्थी तु न, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयापत्तेः।

**यागाय याति** (ई० ३७, ४९)—यष्टुं यातीत्यर्थः। अत्र 'तुमर्थाच्च भाववचनात्' इति सूत्रेण चतुर्थी। अत्र यज् धातोः 'भाववचनाच्च' इति घञ्प्रत्ययनिष्पन्नो यागशब्दः।

**नमस्करोति देवान्** (ई० ४८)—करशिरस्संयोगादिना तोषयतीत्यर्थः। अत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति परिभाषाबलात् 'नमस्वस्ति–' इति सूत्रं प्रबाध्य कर्मत्वात् द्वितीयैव भवति, नतु चतुर्थीति।

**अग्नये स्वाहा** (ई० ५०)—अग्न्युद्देश्यकं द्रव्यदानमित्यर्थः। अत्र 'नमःस्वस्तिस्वाहास्वधा–' इति सूत्रेण चतुर्थी सिद्ध्यति।

**स्वस्ति गोभ्यो भूयात्** (ई० ४६)—अत्र 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' इति सूत्रेण चतुर्थी। नन्वत्र 'चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः'। इत्यनेन चतुर्थी, पक्षे षष्ठी च कुतो नेति चेन्न, 'नमः स्वस्ति–' इति सूत्रे चकारस्य पुनर्वृद्धिविधानार्थत्वेनाश्रयणादत्र आशीर्विवक्षायां परामपि 'चतुर्थी चाशिषी'ति षष्ठीं बाधित्वा चतुर्थ्येव भवतीति दिक्।

**न त्वां तृणं मन्ये तृणाय वा** (ई० ३३)—हे देवदत्त! त्वां तृणत्वेनाऽपि न मन्ये इत्यर्थः। अत्र 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति सूत्रेण विभाषया चतुर्थी। पक्षे द्वितीया च।

**न त्वां शुने मन्ये** (ई० ४७)—हे देवदत्त! त्वां श्वत्वेनापि न मन्ये इत्यर्थः। अत्र प्राणित्वात् 'मन्यकर्मणि–' इति चतुर्थी विकल्पो न स्यादित्यव्याप्तिवारणाय तत्र सूत्रे 'अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्' इति वार्तिकं विहितं तेनात्र प्राणित्वेपि चतुर्थी सिद्ध्यति।

**ग्रामं ग्रामाय वा गच्छति** (ई० ३८, ३९, ४८)—अत्र 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामध्वनि' इति सूत्रेण द्वितीयाचतुर्थ्यौ भवतः।

**उत्पथेन पथे गच्छति** ( ई० ४५ )—अयम्भावः, 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति सूत्रे 'अनध्वनि' इत्युक्तम्। तेन 'पन्थानं गच्छति' इत्यादौ चतुर्थी न भवति। अत्र मूले 'गन्त्राऽधिष्ठितेऽध्वन्येवाऽयं निषेधः' इत्युक्तम् तेन प्रकृते चतुर्थी भवति। पक्षे द्वितीया चेति। उत्पथेनेत्यनन्तरं गन्तुमशक्तः इति शेषः। उत्पथेन काशीं प्राप्तुमशक्तः उत्पथं परित्यज्य काशीमार्गं प्रवेष्टुं तदीयं मार्गमनुसरतीत्यर्थः।

## अथ पञ्चमी विभक्तिः

**ग्रामादायाति** ( ई० ४९ )—ग्रामादागच्छतीत्यर्थः। अत्र कस्मादित्याकाङ्क्षाविषयत्वात् ग्रामोऽवधिरिति 'ध्रुवमपायेऽपादानम्' इति अपादानत्वात् 'अपादाने पञ्चमी' इति पञ्चमी सिद्ध्यति।

**धावतोऽश्वात् पतति** ( ई० ५१ )—अत्र 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञायाम् 'अपादाने पञ्चमी' इति पञ्चमी भवति।

**पापाज्जुगुप्सते विरमति** (ई० ३४)—पापविषये कुत्सितत्वबुद्ध्या न रमत इत्यर्थः। विरमतीत्यत्र पापादित्यनुषज्यते। पापविषये न प्रवर्तत इत्यर्थः। अत्र 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकेन अपादानात् पञ्चमी बोध्या।

**चोराद्बिभेति** ( ई० ५० )—अत्र भयार्थकभीधातुप्रयोगे चोरस्य भयजनकत्वेन 'भीत्रार्थानां भयहेतुः' इत्यपादानसंज्ञायाम् 'अपदाने पञ्चमी' इति पञ्चमी।

**अध्ययनात् पराजयते** ( ई० ४४ )—अत्र 'पराजेरसोढः' इत्यपादानत्वात् पञ्चमी बोध्या। 'पराजयते' इत्यस्य ग्लायतीत्यर्थः। असहनादिति शेषः। यदा असहनान्निवर्तत इत्यर्थ आश्रीयते तदा 'ध्रुवमपाये–' इत्यपादानत्वादेव सिद्धमिति भाष्ये उक्तम्।

**मातुर्निलीयते कृष्णः** ( ई० ३१, ३८, ४१, ५१, ५५ )—कृष्णः मातृकर्तृकस्वविषयकदर्शनविरहाय कुड्यादिना प्रच्छन्नो भवतीत्यर्थः। अत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेनेष्यमाणतया 'अन्तर्धौ येनादर्शनमिच्छति' इत्यनेन मातुरपादानत्वात् 'अपादाने पञ्चमी' इति पञ्चमी भवति।

**उपाध्यायादधीते** ( ई० ३२ )—नियमविशेषपूर्वकमुपाध्यायस्योच्चारणमनुच्चारयतीत्यर्थः। अत्र 'आख्यातोपयोगे' इति सूत्रेण अपादानसंज्ञायाम् 'अपादाने पञ्चमी' इति पञ्चमी।

**चैत्रात्पूर्वः फाल्गुनः** (ई० ४३ ४५)—अयम्भावः, 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति सूत्रे दिशि दृष्टः शब्दो दिक्शब्द इति दिक्शब्दस्य व्याख्यायां यः शब्दः कदाचित् दिशाया वाचकः स्यात्—प्रयोगकाले दिशाया वाचको भवेन्न भवेत्तथापि तद्योगे पञ्चमी भवत्येव। तथा च 'चैत्रात् पूर्वः फाल्गुनः' इत्यादौ पूर्वशब्दः कालस्य वाचको वर्तते न तु दिशायाः, तथापि तद्योगे चैत्रादिति पञ्चमी सिद्धा।

**प्राक् प्रत्यग् वा ग्रामात्** ( ई० ४७ )—अयम्भावः, 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति सूत्रे अञ्चूत्तरपदस्य प्राक् प्रत्यक् इत्यादेरपि दिशावाचकत्वाद् दिक्शब्दत्वेनैव तद्योगे पञ्चम्यां सिद्धायां पुनरञ्चूत्तरपदग्रहणं 'षष्ठ्यतसर्थप्रत्ययेन' इति सूत्रविहितषष्ठ्याः बाधनार्थम्। तथा च 'प्राक् प्रत्यग्' इत्यादौ 'दिक्शब्देभ्यः' इत्यादिसूत्रविहितस्य अस्तातिप्रत्ययस्य 'अञ्चेर्लुक्' इति लुकि तद्योगे षष्ठी न भवति, किन्तु पञ्चम्येव।

**दक्षिणाहि ग्रामात्** ( ई० ३६, ४२ )—ग्रामावधिकायां दक्षिणस्यां दिशि दूर इत्यर्थः। अत्र 'आहि च दूरे' इत्यनेन आहिप्रत्ययः, ततश्च 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इत्यनेन आहिप्रत्ययान्तयोगे पञ्चमी सिद्ध्यति।

**ग्रामाद् बहिः** ( ई० ४६ )—अयम्भावः, वर्जनार्थयोरपपर्योः कर्मप्रवचनीयसंज्ञायां तयोर्योगे 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण पञ्चम्येव भविष्यतीति तयोः साहचर्येण अञ्चूत्तरपदयोगेऽपि पञ्चम्या एव सिद्धत्वेन पञ्चम्यन्तेन समासे सिद्धे 'अपपरिबहि—' इति सूत्रे पञ्चमीपदं व्यर्थं सत् बहिर्योगे पञ्चमी भवतीति ज्ञापयति तेन 'ग्रमाद् बहिः' इति सिद्धम्।

**परि हरेः संसारः** ( ई० ३८, ४८, ५४ )—हरिं वर्जयित्वा जनिमृतिचक्रात्मकं संसरणमित्यर्थः। अत्र 'आङ्मर्यादावचने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण कर्मप्रवचनीययोगे हरिशब्दात् पञ्चमी। अत्र सूत्रे वर्जनार्थकेनापेन साहचर्यात् परिरपि वर्जनार्थक एव गृह्यते। अन्यथा 'वृक्षं प्रति विद्योतते,'

'भक्तो हरिं प्रति' इत्यादावपि परत्वादपवादत्वाच्च द्वितीयां बाधित्वा अनेन पञ्चमी दुर्वारा स्यात्। लक्षणादौ तु 'हरिं परि' इति बोध्यम्।

**आमुक्तेः संसारः** ( ई० ३७, ५२ )—मुक्तेः प्रागिति यावत्। अत्र मर्यादावचनस्य आङः 'आङ्मर्यादावचने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति कर्मप्रवचनीययोगे मुक्तिशब्दात् पञ्चमी।

**तिलेभ्यः प्रतियच्छति माषान्** ( ई० ३९, ५३ )—ऋणत्वेन गृहीतान् तिलान् स्वरूपेण मूल्याद्यात्मना वा प्रत्यर्पयतीत्यर्थः। अत्र 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयसंज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी।

**जाड्यात् जाड्येन वा बद्धः**—अत्र बन्धने जाड्यस्य हेतुत्वाद् गुणत्वाच्च 'विभाषागुणेऽस्त्रियाम्' इत्यनेन जाड्यशब्दात् पञ्चमी। तदभावे 'हेतौ' इति तृतीया।

**ग्रामस्य दूरम् दूरात् दूरेण वा** ( ई० ३३, ३६, ४० )—अत्र 'दूरान्तिकार्थेभ्यो द्वितीया च' इति सूत्रेण दूरशब्दात् द्वितीया, पञ्चमी, तृतीया चेति।

## अथ षष्ठी विभक्तिः

**सर्पिषो जानीते**—अत्र ज्ञाधात्वर्थप्रवृत्तौ सर्पिषः वस्तुतः करणत्वेऽपि तदविवक्षायां सम्बन्धमात्रे 'षष्ठी शेषे' इति षष्ठी।

**मातुः स्मरति** ( ई० ४८ )—अत्र कर्मत्वस्य शेषत्वविवक्षायां सम्बन्धमात्रे 'शेषे षष्ठी' इत्यनेन षष्ठी। देवदत्तकर्तृकं मातृसम्बन्धिस्मरणमित्यर्थः।

**ज्ञानेन निमित्तेन हरिः सेव्यः** ( ई० ३५ )—'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति वार्तिकम्। निमित्तपर्यायाणां प्रयोगे तेभ्यस्तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रायेण प्रयोगो भवतीत्यर्थः। तेन 'किं निमित्तं, केन निमित्तेन, कस्मै निमित्ताय वा वसति, इत्याद्युपपद्यते। अत्र वार्तिके प्रायग्रहणाद् प्रकृतप्रयोगे असर्वनाम्नः प्रथमाद्वितीये न स्तः। तेन 'ज्ञानं निमित्तं हरिः सेव्यः' इति केषाञ्चिन्मतं नोपपन्नम्।

**ग्रामस्य दक्षिणतः** ( ई० ५१ )—अत्र 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति प्राप्तां पञ्चमीं प्रबाध्य 'षष्ठ्यतसर्थप्रत्ययेन' इत्यनेन षष्ठी।

**सर्पिषो ज्ञानम्** ( ई० ५२ )—वस्तुतः करणीभूतं यत् सर्पिः तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः । अत्र 'ज्ञोऽविदर्थस्य करणे' इति षष्ठी ।

[ अयम्भावः—'ज्ञोऽविदर्थस्य करणे' इत्याद्यष्टसूत्रीविषये शेषत्वेन विवक्षिते 'षष्ठी शेषे' इति सूत्रेणैव षष्ठयां सिद्धायाम् अष्टसूत्री व्यर्था सती—'अष्टसूत्र्या या या षष्ठी विधीयते सा सा षष्ठ्येव स्यान्न तु कैश्चिद् ज्ञानादिभिः सुबन्तैः सह तस्याः समासः' इति ज्ञापयति । तेन 'सर्पिषो ज्ञानम्' इत्याद्यसमस्तान्युदाहरणानि साधूनि भवन्ति । अतः 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्तिकमपि फलितम् । ]

**मातुः स्मरणम्** ( ई० ३४, ५१ )—वस्तुतः कर्मीभूतसर्पिः सम्बन्धिस्मरणमित्यर्थः । अत्र 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी ।

**चौरस्य रोगस्य रुजा** ( ई० ३७, ५१, ५४ )—रुजेत्यत्र व्याधिकृतसन्तापादिपीडोच्यते । रोगः चौरं सन्तापादिना पीडयतीति पर्यवसन्तोऽर्थः । अत्र 'रुजार्थानां भाववचनानामज्वरे' इति सूत्रेण चौरस्य शेषत्वविक्षायां षष्ठी ।

**रोगस्य चौरज्वरः** ( ई० ४५ )—रोगकर्तृकं चौरसम्बन्धिज्वरादिकमित्यर्थः । 'रुजार्थानां भाववचनामज्वरे' इत्यत्र 'अज्वरि सन्तापयोरिति वाच्यम्' इत्युक्तं वार्तिककृता, तेन 'ज्वरिसन्ताप्योः' रुजार्थकत्वाद् रोगात्मकत्वाभावकर्तृकत्वाच्च तत्कर्मणश्चौरस्य शेषत्वविवक्षायां नाऽनेन षष्ठा, किन्तु कृद्योगे, षष्ठी शेषे वा षष्ठी भवति । ततश्च 'चौरज्वरः' इति समासो भवत्येवेति ।

**सर्पिषो नाथम्** ( ई० ३९, ४७ )—वस्तुतः कर्मीभूतसर्पिःसम्बन्धि आशासनमित्यर्थः । अत्र ऋकारेत्संज्ञक 'नाथ' धातुः याच्ञोपतापैश्वर्याशिषु वर्तते इति आशिषि अर्थे 'आशिषि नाथः' इत्यनेन सर्पिरित्यस्य शेषत्वविवक्षया षष्ठी ।

**चौरस्य क्राथनम्** ( ई० ३८ )—क्रथ् हिंसायामिति घटादौ वर्तत इति हिंसार्थे 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इति सूत्रेण चौरस्य शेषत्वविवक्षया षष्ठी । वस्तुतः कर्मीभूतचौरसम्बन्धिहननमित्यर्थः । ।

**शतस्य दीव्यति** (ई० ३२, ४९)—शतमक्षक्रीडनेन क्रयविक्रयविषयकमूल्यसंवादेन वा गृह्णातीत्यर्थः । अत्र 'दिवस्तदर्थस्य' इति सूत्रेण कर्मणि षष्ठी ।

**शतस्य शतं वा प्रतिदीव्यति** ( ई० ५४ )—अत्र 'विभाषोपसर्गे' इति विभाषया कर्मणि षष्ठी ।

**पञ्चकृत्वोह्नो भोजनम्** ( ई० ५५ )—पञ्चवारं वस्तुतः अधिकरणीभूतं यदहः तत्सम्बन्धिभोजनमित्यर्थः। अत्र 'कृत्वोर्थप्रयोगे कालेऽधिकरणे च' इति सूत्रेण शेषत्वविवक्षया षष्ठी।

**कृष्णस्य कृतिः** ( ई० ३१ )—कृष्णकर्तृका सृष्टिरित्यर्थः। अत्र 'कर्तृकर्मणोः कृतिः' इति कर्तरि षष्ठी।

( क ) **कृति किं तद्धिते मा भूत् कृतपूर्वीकटम्** ( ई० ३३, ३७, ४३, ४४, ४७, ४९, ५३ )—अयम्भावः, 'कर्तृकर्मणोः' इत्येव सूत्रमस्तु कर्तुः कर्मणश्च क्रियायोगे एव कारकत्वात् सम्भवः, क्रिया च धात्वर्थ एव, धातोश्च द्वये प्रत्ययाः—तिङ् कृतश्च। तत्र तिङां लादेशतया 'न लोकाव्यय–' इति निषेधेन कृत एव अवशिष्यन्ते। ततश्च कृदन्तधातुयोगे एव कर्तुः कर्मणश्च षष्ठी सिद्धौ सूत्रे कृतिग्रहणं किमर्थमिति प्रश्नः। कृतिग्रहणं व्यर्थं सत् सामर्थ्यात् मुख्यविशेष्यताकोपस्थितिजनककृत्प्रत्ययान्तपरम्। तेन तादृशकृदन्तयोगे एवानेन षष्ठी नतु तद्धितार्थविशेषणतयोपस्थितिजनककृदन्तयोगे इत्यर्थः फलति। तथा च 'कृतपूर्वीकटम्' इत्यत्र कृधातोः कर्मणः पूर्वमविवक्षया भावे क्तप्रत्यये ततः पूर्वशब्देन समासे 'पूर्वादिनिः सपूर्वाच्च' इत्यनेन कर्तरि इनि प्रत्यये तद्धितान्तत्वात्प्रातिपदिकत्वेन स्वाद्युत्पत्तौ 'कृतपूर्वी' इति। तत्र पश्चात् कर्मणोऽन्वयविवक्षायां कटशब्दस्य योगे तस्य 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञायां तस्य 'कृत' इति कृदन्तयोगेऽपि नानेन षष्ठी, तस्य तद्धिते निप्रत्ययार्थविशेषणतयैव स्वार्थोपस्थापकतया मुख्यविशेष्यताकोपस्थितिजनकत्वाभावात्। ईदृशरीत्या कर्माविवक्षया भावे क्तप्रत्ययस्य तद्धितवृत्तावेव साधुत्वस्य भाष्यकृदभ्युपेतत्वात्।

( ख ) **कृतपूर्वीकटम्**—अयम्भावः, कर्तृकर्मभ्यां क्रियाया आक्षेपात् क्रियावाची च धातुरेव धातोश्च तिङ्कृतोर्विधानेऽपि तिङ्योगे 'न लोके'ति निषेधात् कृद्योगे एव भविष्यतीति व्यर्थं कृद्ग्रहणं—कृदन्तमात्रनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयीभूतक्रियानिरूपितकर्तृकर्मणोर्यथा स्यात्, तद्धितान्तनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयीभूतक्रियानिरूपितकर्तृकर्मणोर्माभूदिति ज्ञापयति। तेन 'कृतपूर्वीकटम्' इत्यत्र न। अत्र कर्मणोऽविवक्षया भावे क्ते कृतं पूर्वमनेनेति विग्रहे 'सुप्सुपे'ति समासे 'पूर्वाच्चे'ति इनिः पुनः कर्मयोगविवक्षायां 'कृतपूर्वीकटम्' इति बोध्यम्।

( ग ) **कृतकिमिति**—अयम्भावः 'क्रियाजनकत्वं कारकत्व'मिति सिद्धान्तेन

'कर्तृकर्मणोः कृतिः' इति सूत्रे कर्तृकर्मभ्यां क्रियायाः आक्षेपो भवति। क्रिया च धातुवाच्या, धातोश्च तिङः कृतश्चेति द्विधाऽत्ययाः, तत्र तिङ्योगे 'न लोकाव्यय-' इति कर्मणि षष्ठ्या निषेधेन कृद्योगे एव कर्मणि षष्ठी भविष्यतीति कृद्ग्रहणं व्यर्थं सत्—'यत्र कृदन्तमात्रशक्तिग्रहप्रयोज्यक्रियानिरूपितं कर्मत्वं तत्रैव कर्मणि षष्ठी स्यात्, यत्र तु तद्धितान्तप्रयोज्यक्रियानिरूपितं कर्मत्वं स्यात् तत्र माभूत्' इति ज्ञापयति। एवं च 'ओदनस्य पाचकः' इत्यादौ कृदन्तमात्रप्रयोज्यक्रियानिरूपितं कर्मत्वं विद्यते, इति तत्र षष्ठी सिद्ध्यति। 'कृतपूर्वीकटम्' इत्यत्र तु तद्धितान्तप्रयोज्य-क्रियानिरूपितं कर्मत्वमिति षष्ठी न भवति। केवलस्य कृतेति पदस्य योगे कर्मणः उक्तत्वेन कृदन्तमात्रप्रयोज्यक्रियानिरूपितमनुक्तः कर्मत्वन्न भवतीति तत्त्वविदः।

**भेदिका बिभित्सा वा रुद्रस्य जगतः** ( ई० ३३ )—'उभयप्राप्तौ कर्मणि' इति सूत्रे 'स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः' इति वार्तिकपाठात् अत्र प्रयोगे कर्तर्यपि षष्ठी भवति।

**शेषे विभाषा** ( ई० ४५ )—'शेषे विभाषे'ति वचनतात्पर्यमित्थम्-एकस्मिन् कृति उभयोः ( कर्तृकर्मणोः ) षष्ठीप्रसक्तौ कर्मण्येव षष्ठी स्यात्, न तु कर्तरीत्यर्थः, 'उभयप्राप्तौ कर्मणि' इति सूत्रे वार्तिककृता 'स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः' इति वार्तिकमुक्त्वा 'शेषे विभाषा' इति वचनान्तरमुक्तम्। अकारप्रत्ययव्यतिरिक्तप्रत्यय-योगे 'उभयप्राप्तवि'ति नियमो विकल्प्यत इत्यर्थः।

**राज्ञां मतो, बुद्धः पूजितो वा** ( ई० ५३ )—राजकर्तृकवर्तमानेच्छाविषयः, राजकर्तृकवर्तमानज्ञानविषयः, राजकर्तृकवर्तमानपूजादिषयः इति क्रमेणार्थः। अत्र 'मतिबुद्धिपूजार्थेभ्यश्च' इति विहितवर्तमानार्थस्य क्तस्य योगे राज्ञामित्यत्र षष्ठी।

**हरिं दिदृक्षुः** ( ई० ४७, ४९ )—हरिकर्मकदर्शनेच्छावानित्यर्थः। 'दिदृक्षुः' इति दृशेः सन्नन्तात् 'सनाशंसभिक्ष उः' इति उप्रत्ययान्तनिष्पन्नकृदन्तः। अत एवात्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति निषेधात् कर्मणि षष्ठी न।

**सोमं पवमानः** ( ई० ४५ )—'न लोकाऽव्यय-' इति सूत्रे 'तृन्' इति प्रत्याहारः—'शतृशानचा'विति 'तृ' शब्दारभ्य तृनो नकारात्। तेन शानच्प्रत्यया-न्तेऽपि परे सोमशब्दादत्र कर्मणि षष्ठी न।

**वेदमधीयन्** ( ई० ३३ )—'न लोके'ति सूत्रे 'तृन्' इति प्रत्याहारो गृह्यते

तेनात्र 'इङ्धार्योः' इति शतृप्रत्ययान्तनिष्पन्न-अधीयच्छब्दयोगे वेदशब्दात् कर्मणि षष्ठी न।

**ब्राह्मणस्य कुर्वन्** ( ई० ४६ )—मुखतो ब्राह्मणसम्बन्धिसृष्ट्यनुकूलव्यापारवानित्यर्थः। अत्र शेषत्वविवक्षायां 'शेषे षष्ठी' इति षष्ठी। कर्मत्वविवक्षायां तु द्वितीयैव। 'न लोकाव्यय-' इत्यनेनात्र षष्ठीनिषधस्तु न, 'अनन्तरस्ये'ति न्यायेन 'कर्तृकर्मणोः कृतिः' इति प्राप्तषष्ठ्या एव तेन प्रतिषेधात्।

**सतः पालकोऽवतरति**—सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः। अत्र पालधातोः 'तुमुन्ण्वुलौ-' इति भविष्यत्यर्थे ण्वुलो विधानात् तद्योगे 'कर्तृकर्मणोः कृतिः' इति प्राप्तकर्मषष्ठ्याः 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति निषेधे कर्मणि द्वितीया-बहुवचनम्।

**व्रजं गामी** (ई० ५०)—गोष्ठं गमिष्यन्नित्यर्थः। अत्र 'गमेरिनिः' इत्यौणादिकसूत्रेण इनिः। स च भविष्यति विहितः। तेनात्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति सूत्रेण निषेधात् षष्ठी न।

**शतं दायी** ( ई० ४८ )—ऋणत्वेन गृहीतं शतं प्रत्यर्पयतीत्यर्थः। अत्र 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्याधमर्ण्ये णिनिः। तेनात्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति निषेधात् षष्ठी न।

**नेतव्या व्रजं गावः कृष्णेन** (ई० ४१)—'कृत्यानां कर्तरि वा' इति 'कृद्योगे कर्तृकर्मणोः उभयोः प्रसक्ता षष्ठी न' इत्यर्थक 'कृत्यानाम्' इति योगविभागेनात्र षष्ठी न।

**आयुष्यं कृष्णाय** ( ई० ४२ )—अत्र 'चतुर्थी चाशिष्य-' इति चतुर्थी। षष्ठीपक्षे तु 'आयुष्यं कृष्णस्य' इत्यपि भवति।

## अथ सप्तमी विभक्तिः

**सर्वस्मिन्नात्मास्ति** ( ई० ३९ )—अभिव्यापकस्याधारस्योदाहरणमेतत्। व्यापकरूपेण सर्वत्र आत्मा वर्तत इत्यर्थः। 'आधारोऽधिकरणम्' इत्यनेनात्र अधिकरणसंज्ञायां 'सप्तम्यधिकरणे' इति सप्तमी।

**आधारोऽधिकरणम्**—अत्र सूत्रे आधारस्त्रिधा—१. औपश्लेषिकः—उपश्लेषः = संयोगादिसम्बन्धः, तत्प्रयोज्य इत्यर्थः। 'कटे आस्ते' इत्युदाहरणम्।

२. वैषयिकः—विषयतासम्बन्धकृतः। 'मोक्षे इच्छाऽस्ति' इत्युदाहरणम्। ३. अभिव्यापकः—सकलावयवव्याप्तिकृतः। 'सर्वस्मिन्नात्माऽस्ती'त्युदाहरणम्।

**क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्** ( ई० ३८ )—इन्प्रत्ययान्तो यः क्तप्रत्ययान्तस्तस्य कर्मणि सप्तमी स्यादित्यर्थः। 'अधीती व्याकरणे' इत्युदाहरणम्।

**अधीती व्याकरणे** ( ई० ३१, ३२, ३६, ४० )—पूर्वं कर्माविवक्षया भावे क्तप्रत्यये अधीतशब्दात् कर्तरि 'इष्टादिभ्यश्च' इतीनिप्रत्यये ततः कर्मविशेषजिज्ञासायां कर्मत्वेन सम्बद्धात् व्याकरणात् 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति वार्तिकेन सप्तमी।

**साधुः कृष्णो मातरि** ( ई० ४८ )—अत्र 'साध्वसाधुप्रयोगे च' इति वार्तिकेन शेषषष्ठीमपवाद्य सप्तमी।

**चर्मणि द्वीपिनं हन्ति** ( ई० ४४ )—चर्मार्थं व्याघ्रं हन्तीत्यर्थः। अत्र 'निमित्तात् कर्मयोगे' इति वार्तिकेन सप्तमी।

**सीम्नि पुष्कलको हतः** ( ई० ५५ )—'निमित्तात् कर्मयोगे' इति वार्तिके निमित्तं फलम्। योगः संयोगसमवायात्मकः। प्रकृतप्रयोगे हतौ तृतीया, तादर्थ्ये चतुर्थी च प्राप्ता ते प्रबाध्य अनेन सप्तमी। सीमा = अण्डकोशः। पुष्कलकः = गन्धमृगः। अत्र पुष्कलकेन कर्मणा सीम्नः समवाय एव।

**गोषु दुह्यमानासु गतः** ( ई० ५१ )—देवदत्तः कदा गतः इति प्रश्ने उत्तरमिदम्। अत्र 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। गोदोहनदशायां गतः इत्युत्तरम्।

**रुदति रुदतो वा प्राव्राजीत्** ( ई० ५४ )—कदा संन्यस्तवानिति प्रश्ने उत्तरमिदम्। अत्र 'षष्ठी चानादरे' इति सूत्रेण षष्ठीसप्तम्यौ स्तः। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः।

**गवां गोषु वा स्वामी** ( ई० ५० )—अत्र 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' इति सूत्रेण षष्ठीसप्तम्यौ स्तः।

**छात्राणां छात्रेषु वा मैत्रः पटुः** (ई० ४२, ५१)—छात्रसमुदायैकदेशभूतो मैत्रनामा स्वेतरव्यावृत्तपटुत्वधर्मक इत्यर्थः। अत्र 'यतश्च निर्धारणम्' इति सूत्रेण षष्ठीसप्तम्यौ स्तः।

**प्रसित उत्सुको वा हरिणा हरौ वा** ( ई० ३५ )—अत्र प्रसित-उत्सुक-शब्दयोगे हरिशब्दात् 'प्रसितोत्सुकाभ्यां तृतीया च' इति सूत्रेण तृतीया सप्तमी च भवतः ।

**यस्मादधिकमिति**—अत्र ईश्वरवचनमित्यत्र ईश्वरशब्दो भावप्रधानः । तथा च ईश्वरत्वमुच्यते इति विग्रहः । यस्येति षष्ठयाश्च निरूपितत्वं निष्ठत्वञ्चार्थः । एवं च यन्निरूपितमीश्वरत्वमुच्यते तद्वाचकात् सप्तमी । अथ च यन्निष्ठमीश्वरत्वमुच्यते तद्वाचकात् सप्तमीत्यर्थद्वयं जायते । तथा च-यन्निरूपितमीश्वरत्वमुच्यते इति व्याख्याने भूशब्दात् सप्तमी सिद्धयति । यन्निष्ठमीश्वरत्वमुच्यते इति व्याख्याने तु रामशब्दात् सप्तमी । तथा च 'अधिभुवि रामः' 'अधि रामे भूः' इति प्रयोगद्वयं सिद्धं भवति ।

**उपपरार्धे हरेर्गुणाः** ( ई० ४२, ४४, ४७ )—परार्धादधिकाः इत्यर्थः । अत्र 'उपोऽधिके च' इत्यनेन उपेत्यस्य कर्मप्रवचनीयसंज्ञायां 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति सूत्रेण सप्तमी । अवधित्वं सप्तम्यर्थः ।

**अधि भुवि रामः, अधि रामे भूः** ( ई० ३१, ४१, ४६, ५१, ५३ )—'यस्मादधिकम्' इत्यस्य व्याख्यानादर्थद्वयं विवक्षितं भवति-यन्निरूपितमीश्वरत्वमुच्यते तद्वाचकात् सप्तमी, अथ च-यन्निष्ठत्वमीश्वरत्वमुच्यते तद्वाचकात् सप्तमीति । तथा च यन्निरूपितमिति व्याख्याने भूशब्दात् सप्तमी सिद्धयति । यन्निष्ठमिति व्याख्याने तु रामशब्दात् सप्तमी सिद्धयतीति ।

**यदत्र मामधिकरिष्यति** ( ई० ४५ )—अस्मिन् विषये मामधिकरिष्यतीति यत्तद्युक्तमित्यर्थः । अत्र 'विभाषा कृञि' इति कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति । अधिकरिष्यतीत्यस्य 'विनियोक्ष्यते' इत्यर्थः । ननु तर्हि कर्मत्वादेवात्र द्वितीया सिद्धौ किं कर्मप्रवचनीयत्वेनेति चेन्न, गतिसंज्ञाबाधनार्थत्वेन तस्यावश्यकत्वात् ।

इति कारकप्रकरणम्



# अथ अव्ययीभावसमासः

( क ) **भूतपूर्वः** ( ई० ४६,५१ )—पूर्वं भूतो भूतपूर्वः। पूर्वमिति क्रियाविशेषणम्। 'पूर्व अम् भूत सु' इत्यलौकिकविग्रहे 'सुप्सुपा' इति समासे सुपो लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य भूतशब्दस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे स्वादिकार्ये 'भूतपूर्वः' इति। ननु 'सुपो धातुप्रातिपदिकयोः' इति सूत्रे 'सुबिति प्रत्याहारग्रहणम्' इत्युक्तत्वादत्र सुब्ग्रहणेन तन्निर्दिष्टयोरुभयोरपि भूतपूर्वशब्दयोरुक्तसूत्रेण उपसर्जनसंज्ञायां पर्यायेण द्वयोरपि पूर्वप्रयोगापत्तिरिति चेन्न, 'भूतपूर्वे चरट्' इति सूत्रनिर्देशात् भूतशब्दस्यैव पूर्वनिपाताऽभ्युपगमात्।

( ख ) **भूतपूर्वः**—पूर्वं भूतः इति लौकिकविग्रहे पूर्व अम् भूत सु इत्यलौकिकविग्रहे 'सहसुपा' इति समासे समासत्वात् प्रातिपदिकसंज्ञायां 'सुपो धातु—' इति प्रातिपदिकावयवस्य सुपो लुकि शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्जनत्वस्य पूर्वपदार्थे सत्त्वेन तस्यैव पूर्वप्रयोगे प्राप्ते 'भूतपूर्वे चरट्' इति निर्देशेन भूतशब्दस्यैव पूर्वप्रयोगे एकदेशविकृतन्यायेन पुनः सुबुत्पत्तौ 'भूतपूर्वः' इति जातम्।

**जीमूतस्येव** (ई० ४४)—अत्र 'इवेन समासो विभक्त्यलोपश्च' इति वार्तिकेन समासे विभक्तेरलुकि उक्तं रूपं सिद्धम्। न चात्र 'सहसुपे'ति समासः कुतो नेति वाच्यम्, इवशब्दस्यापि सुबन्तत्वाऽविशेषात् समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातापत्तेः।

**अपदिशम्** ( ई० ३९, ४९ )—दिशयोर्मध्ये अपदिशम्। अत्र 'अव्ययम्' इति योगविभागात् समासे 'सुपो धातुरि'ति प्रातिपदिकत्वात् सुब्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य 'अप' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'अप दिशा' इति स्थिते 'एकविभक्ति चापूर्वनिपाते' इत्यनेन दिशाशब्दस्योपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समासत्वात् प्रातिपदिकसंज्ञायां समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति सुब्लुकि प्राप्ते तम्प्रबाध्य 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सोरमादेशे 'अतोऽम्' इति पूर्वरूपे उक्तं रूपं सिद्धम्। 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमरस्वारस्येन भागुरिमतसिद्धटापो वैकल्पिकत्वेन च

न ह्रस्वप्रयोजनमिति । ( 'अपदिशम्' इति तु पञ्चमीभिन्नविभक्तीनामुदाहरणम् । तृतीया सप्तमीविभक्तौ तु 'तृतीयासप्तम्योर्बहुलम्' इत्युक्तत्वात् 'अपदिशम्-अपदिशेन, अपदिशम्-अपदिशे' इत्युदाहरणानि )।

**सुमद्रम्** ( ई० ३८ )—अयम्भावः, 'तृतीयासप्तम्योर्बहुलम्' इति सूत्रे वाग्रहणादेव विकल्पे सिद्धे बहुलग्रहणं किमर्थमिति चेन्न, 'सुमद्रम्' इत्यादौ अम्भावस्य नित्यविधानेन तस्य चारितार्थ्यात् ।

**अधिहरि** (ई० ३३, ४६, ४८, ५०, ५४)—हरौ इतीति लौकिकविग्रहे हरि ङि अधि 'सु' इत्यलौकिकविग्रहे 'अव्ययम्–' इत्यादिना विभक्त्यर्थेऽव्ययीभावसमासे प्रातिपदिकत्वात् सुब्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य 'अधि' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इत्यधेः पूर्वप्रयोगे 'एकदेशविकृतन्यायेन पुनः समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति तस्य लुकि 'अधिहरि' इति सिद्धम् । अत्र निपातेनाधिकरणस्योक्तार्थत्वात् कथं सप्तमीत्याशङ्क्य विभक्तिग्रहणसामर्थ्यात् सप्तमीत्युक्तं मूले । अयम्भावः–'अधि' इत्यव्ययस्याधिकरणवाचकत्वेन 'उक्तार्थानामप्रयोगः' इति न्यायेन ङिविभक्तेरप्राप्तिरिति विभक्त्यर्थसमासविधानसामर्थ्यादत्र ङिविभक्तिसिद्धिर्भवति । यस्मिन् विभक्त्यर्थे समासो विवक्षितस्तदर्थवाचकविभक्त्या यत्सुबन्तं तेनैव सहाव्ययस्य समासो भवतीति, अन्यसुबन्तेन अध्यव्ययस्य समासो न स्यादिति संक्षेपः ।

**अधिगोपम्** ( ई० ३४, ४३, ५२ )—गोपायतीति गाः पातीति वा गोपाः, तस्मिन्नित्यधिगोपम् । 'अव्यय'मित्यादिना विभक्त्यर्थे अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यधीत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे एकदेशविकृतन्यायेन पुनः समुदायात् सौ 'अव्ययीभावश्च' इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमि पूर्वरूपे उक्तं रूपं सिद्धम् । 'गोस्त्रियोः–' इति तु नात्र प्रसज्यते स्त्रीप्रत्ययान्तत्वाभावात् ।

**सम्मद्रम्** (ई० ४९ )—मद्राणां समृद्धिः सम्मद्रम् । 'अव्यय'मित्यादिना समृध्यर्थे अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति समित्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमि पूर्वरूपे उक्तं रूपं सिद्धम् ।

**निर्मक्षिकम्** ( ई० ४४ )—मक्षिकाणामभावो निर्मक्षिकम्। 'अव्ययं विभक्ति–' इत्यादिना अभावार्थे अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यादिना 'निर्' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'एकविभक्ति चापूर्वनिपाते' इत्यनेन मक्षिकाशब्दस्योपसर्जनसंज्ञायां 'गोस्त्रियोः–' इति ह्रस्वत्वे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि प्राप्ते तम्प्रबाध्य 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**अतिहिमम्** ( ई० ४४, ४७ )—हिमस्याऽत्ययो ( ध्वंसः ) अतिहिमम्। 'अव्ययम्–' इत्यादिना अत्ययार्थे अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–'इति समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य 'अति' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमादेशे पूर्वरूपे उक्तं रूपं सिद्धम्।

**प्रत्यर्थम्** ( ई० ५१, ५२ )—अर्थमर्थं प्रति प्रत्यर्थम्। 'अव्ययम्–' इत्यादिना वीप्सार्थे अव्ययीभावसमासे समासत्वात् प्रातिपदिकसंज्ञायां 'सुपो धातु:–' इति सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति प्रतीत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वेन 'अव्याद्–' इति लुकि प्राप्ते तम्प्रबाध्य 'नाव्ययीभावाद्–' इति सोरमादेशे पूर्वरूपे 'प्रत्यर्थम्' इति। नन्वस्य नित्यसमासत्वेन विग्रहोऽनुचित इति चेन्न, प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् द्वितीयागर्भकवाक्यमपि भवतीति कल्पनेनादोषादिति दिक्।

**ससखि** ( ई० ३० )—सदृशः सख्येति विग्रहे सादृश्यार्थकस्य सदृशशब्दस्य 'अव्ययम्–' इत्यादिना समासे समासत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यादिना 'सहे' त्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'अव्ययीभावे चाकाले' इति सहशब्दस्य सभावे ससखिशब्दात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि 'ससखि' इति सिद्धम्।

**साग्नि** ( ई० ३९ )—अग्निग्रन्थपर्यन्तमधीते इत्यस्वपदविग्रहे 'अग्नि अम् सह सु' इत्यलौकिकविग्रहे अन्तेऽर्थे वर्तमानस्य सदृशशब्दस्य 'अव्ययम्–' इत्यादिना समासे समासत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि 'प्रथमानिर्दिष्टम्—' इत्युपसर्जनसंज्ञा–

याम् 'उपसर्जनं पूर्वम्' इति सहेत्यस्य पूर्वप्रयोगे 'अव्ययीभावे चाकाले' इति सहस्य सादेशे सवर्णदीर्घे समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम्। अव्ययमिति सूत्रे अन्तशब्देन अन्तावयवसाहित्यं विवक्षितम्। अग्नि-शब्देन अग्निचयनप्रतिपादको ग्रन्थो विवक्षितः। तेन अन्तावयवेन सहितं ग्रन्थमिति विग्रहो बोध्यः।

**शाकप्रति** (ई० ५४)—शाकस्य लेशः शाकप्रति। अत्र प्रतीत्यव्ययं मात्रार्थकम्। अतस्तेन शाकस्य सुबन्तस्य 'सुप्प्रतिना मात्रार्थे' इत्यनेन समासे सुब्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन समासशास्त्रघटकसुविति प्रथमान्तपद-निर्दिष्टस्य शाकस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे एकदेश-विकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम्।

**अक्षपरि** (ई० ४३)—अक्षेण विपरीतं वृत्तमक्षपरि। अत्र 'अक्षशलाका-संख्याः परिणा' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति समासशास्त्रघटकाक्षेति प्रथमान्तनिर्दिष्टस्य अक्षशब्दस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्व-प्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुब्लुकि 'अक्षपरि' इति।

**विभाषा–अधिकारोऽयम्** (ई० ३२, ३९, ४४, ५१, ५२)—अय-म्भावः, एकार्थीभावविवक्षायां समासस्य व्यपेक्षाविवक्षायां वाक्यस्य च सिद्धौ विभाषाधिकारः किमर्थः इति चेन्न, लक्षणैकचक्षुष्काणां वैयाकरणानां क्व एकार्थीभावो नित्यः क्व च वैकल्पिकः इति ज्ञानस्याशक्यतया तदर्थमधिकारस्यावश्यकत्वात्। अत्र विभाषाधिकारेण प्राचीनानां नित्यसमासत्वं बोध्यते। न चैवं 'सहसुपे'त्यस्यापि नित्यत्वापत्तौ 'विस्पष्टं पटुर्विस्पष्टपटुः' इति भाष्योक्तविग्रहासङ्गतिरिति वाच्यम्, 'अव्ययम्–' इत्यादिना अव्ययीभावसंज्ञाविधानेनैव सिद्धे समाससंज्ञाविधानसामर्थ्येन सहसुपेत्यस्य वैकल्पिकत्वज्ञापनादिति दिक्।

**आबालं हरिभक्तिः** (ई० ४४)—अत्र 'आङ्मर्यादाऽभिविध्योः' इति सूत्रेण अभिविध्यर्थे वर्तमानस्य 'आ' इत्यस्य 'बालेभ्यः' इति पञ्चम्यन्तेन समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति 'आ' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्'

इति पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययसंज्ञायाम् 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सोरमादेशे पूर्वरूपे 'आबालम्' इति ।

**प्रत्यग्नि** ( ई० ३९ )—अग्निं प्रति प्रत्यग्नि । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे यणि एकदेशविकृतन्यायेन प्रत्यग्निशब्दात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सोर्लुकि 'प्रत्यग्नि' इति ।

**अनुवनमशनिर्गतः** ( ई० ३७ )—वनस्य समीपं गत इत्यर्थः । वनस्य अनु इति विग्रहः । अत्र 'अनुर्यत्समया' इत्यनेन समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यनु–इत्यस्योपसर्जनसंज्ञायां तस्य पूर्वप्रयोगे एकदेशविकृतन्यायेन अनुवनशब्दात्समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययसंज्ञायां 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सोरमि पूर्वरूपे 'अनुवनम्' इति ।

**अनुगङ्गम्** ( ई० ४० )—गङ्गायाः अनु, इत्यनुगङ्गम् = वाराणसी । अत्र 'यस्य चायामः' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यनेन 'अनु' इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे 'अव्ययीभावश्च' इति नपुंसकसंज्ञायां 'ह्रस्वो नपुंसके—' इति ह्रस्वत्वे एकदेशविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययसंज्ञायां 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सोरमि पूर्वरूपे 'अनुगङ्गम्' इति ।

**आयतीगवम्** ( ई० ४१, ४६ )—आयत्यो गावो यस्मिन् काले इति विग्रहे 'तिष्ठद्गुप्रभृतीनि च' इत्यनेन निपातनात् 'आयतीगवम्' इत्यस्य सिद्धिर्भवति । इह शत्रादेशः पुंवद्भावविरहः समासान्तश्च निपात्यते । निपातप्रकरस्त्वित्थम्–आयत्यो गावः इति प्रथमासमानाधिकरणत्वात् 'लटः शतृशानचौ' इत्यस्याप्राप्तौ निपातनात् शत्रादेशः । आयतीशब्दस्य 'स्त्रियाः पुंवत्' इति पुंवत्वस्य प्राप्तौ निपातनात् तदभावः । तत्पुरुषे एव गोशब्दस्य टज्विधानात् आयतीगोशब्दस्य निपातनात् समासान्तष्टच्, चकारात् अव्ययीभावश्चेति ।

**पारे मध्ये षष्ठ्या वा** ( ई० ४७, ४९ )—पारमध्यशब्दौ षष्ठ्यन्तेन वा समस्यते, एतदन्तत्वञ्चानयोर्निपात्यत इत्यर्थः । ननु विभाषेत्यधिकारदेव विकल्पे सिद्धे सूत्रे वाग्रहणं किमर्थमिति चेन्न, वाग्रहणाभावेऽयमव्ययीभावसमासो विशेषविहितत्वात् षष्ठीसमासं बाधेत, ततश्च 'गङ्गापारात्' इत्यस्य सिद्धिर्न स्यादिति तद्बाधनार्थं वाग्रहणस्यावश्यकत्वात् ।

**पारेगङ्गादानय** ( ई० ५२, ५५ )—गङ्गायाः पारादिति विग्रहे 'पारे मध्ये षष्ठया वा' इत्यनेन अव्ययीभावसमासे सुब्लुकि पारशब्दस्य पूर्वनिपाते निपातनादेत्वे 'अव्ययीभावश्च' इति नपुंसकसंज्ञायां 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति नपुंसकह्रस्वत्वे एकदेशविकृतन्यायेन पारेगङ्गशब्दात् समासात् पुनः पञ्चम्युत्पत्तिः। 'अव्ययादाप्सुपः' इति सुपो लुक् तु न 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति निषेधात्। पञ्चम्याः इति पर्युदासात् अम्भावश्च नेति। विकल्पपक्षे तु षष्ठीतत्पुरुषसमासे गङ्गापारादिति।

**मध्येगङ्गम्** ( ई० ४३ )—गङ्गायाः मध्यं = मध्येगङ्गम्। अत्र 'पारे मध्ये षष्ठया वा' इति अव्ययीभावसमासे सुब्लुकि मध्यशब्दस्य पूर्वनिपाते निपातनादेत्वे 'अव्ययीभावश्च' इति नपुंसकसंज्ञायां 'ह्रस्वो नपुंसके–' इति नपुंसकह्रस्वत्वे मध्येगङ्गशब्दात् समासात् सौ तस्य 'अव्ययीभावश्च' इत्यव्ययत्वात् लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति अमादेशे पूर्वरूपे 'मध्येगङ्गम्' इति।

**त्रिमुनि व्याकरणम्** ( ई० ४५ )—त्रयो मुनयः ( पाणिनि–कात्यायन–पतञ्जलयः ) इति विग्रहः। अत्र 'संख्या वंश्येन' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति त्रिशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् त्रिमुनिशब्दात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सोर्लुकि 'त्रिमुनि' इति। नन्वत्र त्रिमुनि व्याकरणमिति सामानाधिकरण्यानुपपत्तिरिति चेन्न विद्यातद्वतामभेदविवक्षायां सामानाधिकरणस्योपपत्तेः। यद्यपि बहुव्रीहिणाप्येतत्सिद्धं भवेत् किन्तु विभक्त्यन्तरेषु रूपभेदः स्यादित्यवसेयम्।

**सप्तगङ्गम्** ( ई० ४९ )—सप्तानां गङ्गानां समाहार इति विग्रहे 'तद्धितार्थ–' इति द्विगुसमासं बाधित्वा 'नदीभिश्च' इत्यनेन अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति 'सप्त'त्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'अव्ययीभावश्च' इति नपुंकसकसंज्ञायां 'ह्रस्वो नपुंसके–' इति ह्रस्वत्वे समासत्वात् प्रातिपदिकसंज्ञायां सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमादेशे पूर्वरूपे उक्तं रूपं सिद्धम्। 'नदीभिश्च' इत्यत्र 'समाहारे चायमिष्यते' इति वार्तिककृतोक्तमित्यपि न विस्मर्तव्यम्।

**द्वियमुनम्** ( ई० ५३ )—द्वयोर्यमुनयोः समाहारः इति विग्रहे 'तद्धितार्थ–' इति द्विगुसमासं बाधित्वा 'नदीभिश्च' इत्यव्ययीभावसमासे सुब्लुकि द्विशब्दस्योप-

सर्जनसंज्ञायां पूर्वप्रयोगे समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'नाव्ययीभावादिति सोरमादेशे पूर्वरूपे 'द्वियमुनम्' इति। 'समाहारे चायमिष्यते' इति वार्तिकोक्तत्वात् समाहारे एव 'नदीभिश्चे'त्यनेन समासः इत्यवसेयम्।

**उन्मत्तगङ्गम्** ( ई० ४० )—उन्मत्ता गङ्गा यस्मिन् देशे स उन्मत्तगङ्गं नाम देशः। 'अन्यपदार्थे च संज्ञायाम्' इत्यनेनात्र अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति उन्मत्तशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् समासात् सौ 'अव्ययीभावश्च' इति नपुंसकसंज्ञायां 'ह्रस्वो नपुंसके–' इति नपुंसकह्रस्वत्वे 'अव्ययीभावश्चे'ति अव्ययत्वात् 'नाव्ययीभावादि'ति सोरमादेशे पूर्वरूपे उक्तं रूपं सिद्धम्। उन्मत्ता गङ्गा यस्मिन्निति वाक्येन देशविशेषस्यानवगमादिह नित्यसमासः। ततश्च नास्त्यत्र लौकिकविग्रहः, अस्वपदविग्रहो वेति फलति।

**लोहितगङ्गम्** ( ई० ५० )—लोहिता गङ्गा यस्मिन् देशे स लोहितगङ्गं नाम देशः। 'अन्यपदार्थे च संज्ञायाम्' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति लोहितशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे नपुंसकह्रस्वत्वे समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'नाव्ययीभावात्–'इति सोरमि पूर्वरूपे 'लोहितगङ्गम्' इति। लोहिता गङ्गा यस्मिन्निति वाक्येन देशविशेषस्यानवगमादिह नित्यसमासः।

**उपशरदम्** ( ई० ३४, ३५, ४८, ५५ )—शरदः समीपमुपशरदम्। 'अव्ययं विभक्ति—'इत्यादिना समीपार्थकस्य 'उपे'त्यव्ययस्य शरदः इति षष्ठ्यन्तेन समासे सुब्लुकि 'प्रथमानिर्दिष्टम्—'इत्यादिना उपेत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्ते टचि एकदेशविकृतन्यायेन समुदायात् समासान्तात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सोर्लुकि प्राप्ते 'नाव्ययीभावात्–'इति सोरमि पूर्वरूपे 'उपशरदम्' इति। 'अव्ययानां भमात्रे टिलोपः' इत्यनेनात्र टिलोपस्तु न, 'उपशरद्' इति टजन्तरहितस्य अव्ययीभावसमासत्वाभावेन अनव्ययत्वात्।

**उपजरसम्** ( ई० ३९, ५४ )—जरायाः समीपमुपजरसम्। 'अव्ययम्–' इत्यादिना उपेत्यस्य 'जरायाः' इति षष्ठ्यन्तेन अव्ययीभावसमासे सुब्लुकि प्रथमानिर्दिष्टम्–' इति उपेत्यस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्ते टचि 'उप जरा अ' इति स्थिते टचो विभक्तित्वाऽभावात् तस्मिन् परे जरसादेशेऽप्राप्ते 'जराया जरस् च' इति शरदादिगणपठितगणसूत्रेण जरसि एकदे-

शविकृतन्यायेन समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययसंज्ञायाम् 'अव्ययात्–' इति लुकि प्राप्ते 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे उक्तं रूपं सिद्धम् ।

**प्रत्यक्षम्** ( ई० ४२ )—अक्ष्णोरभिमुखमित्यर्थः । अक्षिणी प्रतीति विग्रहे 'लक्षणेनाभिप्रती आभिमुख्ये' इति अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति प्रतीत्यस्योपसर्जनसंज्ञायाम् पूर्वप्रयोगे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टचि 'यस्येति च' इत्यकारलोपे यणि एकदेशविकृतन्यायेन समुदायात् समासान्तात् प्रत्यक्षशब्दात् सौ 'अव्ययीभावश्च' इत्यव्ययसंज्ञायां सोर्लुकि प्राप्ते 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे 'प्रत्यक्षम्' इति ।

**परोक्षम्** ( ई० ३०, ३३ )—अक्ष्णः परमिति विग्रहे परमित्यस्य 'अक्षि' इत्यनेन अव्ययीभावसमासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति परशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टचि 'यस्येति च' इत्यलोपे 'परोक्षे लिट्' इति निपातनात्परस्य ओकारादेशे पररूपे च कृते एकदेशविकृतन्यायेन परोक्षशब्दात् समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सोर्लुकि प्राप्ते 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे 'परोक्षम्' इति । अत्र 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यव्ययीभावे टज्विधानसामर्थ्यात् अनव्ययस्यापि परशब्दस्य अव्ययीभावः ।

**परोक्षा क्रिया** ( ई० ३३ )—परोक्षमस्यास्तीत्यर्थे परोक्षशब्दात् धर्मप्रधानात् 'अर्श आदिभ्योऽच्' इति मन्वर्थीये अच्प्रत्यये कृते 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि च कृते 'परोक्षा क्रिया' इत्यादि सिद्धम् । 'प्रतिपरसमनुभ्योऽक्ष्णः' इति गणसूत्रे परग्रहणं प्रक्षिप्तमिति युक्तम्, 'परोक्षे लिट्' इति सूत्रस्थभाष्यकैयटयोरत्र समासान्तस्यापि निपातनेनैव साधितत्वात् ।

**उपराजम्** ( ई० ४७ )—राज्ञः समीपमिति विग्रहे 'अव्ययम्–' इत्यादिना समासे 'प्रथमानिर्दिष्टम्–' इत्युपेत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'अनश्च' इति टचि सुब्लुकि 'नस्तद्धिते' इति टिलोपे एकदेशविकृतन्यायेन उपराजशब्दात् सौ 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे उक्तं रूपं सिद्धम् । टजन्तस्यैव अव्ययीभावसमासत्वाट्टचि परे 'अव्ययानां भमात्रे टिलोपः' इत्यस्याप्रवृत्तेः 'नस्तद्धिते' इत्यारम्भः ।

**अध्यात्मम्** ( ई० ५१ )—आत्मनीत्यर्थः । अत्र 'अव्ययम्–'इत्यादिना विभक्त्यर्थे अव्ययीभावसमासे 'प्रथमानिर्दिष्टम्–' इति अधीत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे 'आनश्च' इति टचि सुब्लुकि 'नस्तद्धिते' इति टिलोपे यणि एकदेशविकृतन्यायेन अध्यात्मशब्दात् सौ 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे 'अध्यात्मम्' इति । टजन्तस्यैव अव्ययीभावसमासत्वात् टचि परे "अव्ययानां भमात्रे–' इत्यस्याप्रवृत्तेः 'नस्तद्धिते' इत्यस्यारम्भः ।

**उपनदम्** ( ई० ३८, ५३ )—नद्याः समीपमिति विग्रहे 'अव्ययम्–' इत्यादिना समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति उपेत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'नदीपौर्णमास्याग्रहायणीभ्यः' इति टचि 'यस्येति च' इतीकारलोपे समुदायात् सौ 'नाव्ययीभावात्–'इत्यमि पूर्वरूपे 'उपनदम्' इति । टजभावे नपुंसकह्रस्वत्वे 'अव्ययादि'ति सोर्लुकि 'उपनदि' इति ।

**उपसमिधम्** ( ई० ४२, ५२, ५५ )—समिधः समीपमित्यस्वपदविग्रहे 'अव्ययम्–' इत्यादिना समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इत्यनेन उपेत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'झयः' इत्यनेन विभाषया टचि समुदायात् सौ 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे उक्तं रूपं सिद्धम् । टजभावपक्षे तु अजन्तत्वाभावात् 'नाव्ययीभावात्–' इत्यस्याप्राप्तया 'अव्ययादि'ति सोर्लुकि जश्त्वे चर्त्वे 'उपसमिदि'ति ।

इत्यव्ययीभावः ।

---

## अथ तत्पुरुषः

**कृष्णश्रितः** ( ई० ३४, ४९, ५५ )—कृष्णं श्रितः–'कृष्णश्रितः' इति लौकिकविग्रहः । कृष्ण अम् श्रित सु इत्यलौकिकविग्रहे 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इत्यनेन तत्पुरुषसमासे समासत्वात्प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि 'द्वितीया श्रिते'ति समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य 'श्रिते'त्यस्य 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् कृष्णश्रितशब्दात् समासत्वात् सौ तस्य रुत्वे विसर्गे च कृते उक्तं रूपं सिद्धम् ।

**खट्वारूढः** ( ई० ५० )—जाल्मः इति शेषः। ( जाल्मः = असमीक्ष्यकारी )। 'खट्वा अम् आरूढ स्' इत्यलौकिकविग्रहे 'खट्वा क्षेपे' इत्यनेन समासे सुब्लुकि समासत्वात् सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम्। खट्वामारूढः इति वाक्येन निन्दामनवगमात् नित्यसमासोऽयम्। अत एव नात्र लौकिकविग्रहः।

**आचारनिपुणः** ( ई० ४० )—आचारेण निपुणः आचारनिपुणः। आचारहेतुकनैपुण्यवानित्यर्थः। अत्र 'आचार टा निपुण स्' इत्यलौकिकविग्रहे 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति सूत्रेण समासे सुब्लुकि एकदेशविकृतन्यायेन समुदायात् सौ रुत्वे विसर्गे उक्तं रूपं जातम्।

**गुडमिश्रः** ( ई० ३१, ५४ )—गुडेन मिश्रः गुडमिश्रः। अत्र 'पूर्वसदृश–' इति समासे सुब्लुकि समासत्वात् सौ रुत्वे विसर्गे 'गुडमिश्रः' इति।

**गुडसम्मिश्राः** ( ई० ४३ )—गुडेन सम्मिश्राः गुडसम्मिश्राः धानाः इति शेषः। अत्र 'पूर्वसदृश–' इति समासे सुब्लुकि स्वादिकार्ये उक्तं रूपं सिद्धम्। नन्वत्र कथं समासः? सुबन्तविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् सूत्रस्थमिश्रग्रहणेन सम्मिश्रग्रहणं न स्यादिति चेन्न, 'मिश्रं चानुपसर्गमसन्धौ' इति सूत्रस्थाऽनुपसर्गग्रहणेन मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति ज्ञापनस्य जागरूकत्वात्।

**नखभिन्नः** ( ई० ५१ )—नखैर्भिन्नः इति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति सूत्रेण समासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे उक्तं रूपं जातम्।

**नखनिर्भिन्नः** ( ई० ४५ )—नखैर्निर्भिन्नः इति विग्रहे 'कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम्' इति परिभाषया भिन्नेति क्तान्तेन निरुपसृष्टस्य 'निर्भिन्न' इत्यस्यापि ग्रहणात् 'कर्तृकरणे कृता बहुलम्' इति समासे सुब्लुकि स्वादिकार्ये उक्तं रूपं सिद्धम्।

**वातच्छेद्यं तृणम्** ( ई० ३९, ५२, ५३ )—तृणमिति शेषः। अत्र छेद्यमिति कृत्प्रत्ययान्तः। वातेन छेद्यम् ( छेत्तुं योग्यम् ) इति विग्रहे 'कृत्यैरधिकार्थवचने' इत्यनेन समासे सुब्लुकि स्वादिकार्ये उक्तं रूपं सिद्धम्। कोमलत्वेनाऽत्र स्तुतिः, दुर्बलत्वेन निन्दा वा तृणे गम्यते।

**दध्योदनः** ( ई० ३५, ४०, ४७ )—दध्ना ( उपसिक्तः ) ओदनः इति विग्रहे 'अन्नेन व्यञ्जनम्' इति सूत्रेण समासे सुब्लुकि यणादेशे स्वादिकार्ये 'दध्योदनः' इति । नन्वत्र दध्नेति करणत्वस्य उपसिक्तपदापेक्षत्वाद् असामर्थ्येन कथमत्र समासः इति चेन्न, उपसेकक्रियां विना दध्नः अन्नसंस्कारकत्वानुपपत्त्या दध्नः इत्यस्य दधिकरणकोपसेके वृत्तेर्न असामर्थ्यमित्युक्तत्वात् । तदुक्तं भाष्ये—'युक्तार्थसम्प्रत्ययाच्च सामर्थ्यम्' इति ।

**यूपदारु** ( ई० ४९ )—यूपाय दारु इति विग्रहे 'चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः' इति सूत्रेण समासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां सौ 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति नपुंसकत्वात् सुब्लुकि उक्तं रूपं सिद्धम् । अत्र चतुर्थ्यन्तवाच्ययूपार्थं दारु, अतः दारुशब्देन यूपायेत्यस्य समासः ।

**रन्धनाय स्थाली** ( ई० ४६ )—अत्र स्थाल्याश्चतुर्थ्यन्तवाच्यपाकार्थत्वेऽपि प्रकृतिविकृतिभावविरहात् न 'चतुर्थीतदर्थे'ति समासः ।

**द्विजार्थः सूपः** ( ई० ५० )—'अर्थेन नित्यसमासो विशेष्यालिङ्गता चेति वक्तव्यम्' इति वार्तिकेनाऽत्र समासः । द्विजस्योपकारकः सूप इत्यर्थः । द्विजाय अयमित्यस्वपदविग्रहः, नित्यसमासत्वेन अस्वपदविग्रहस्य औचित्यात् ।

**राजपुरुषः** ( ई० ५० )—राज्ञः पुरुषः राजपुरुषः । राजन् ङस् पुरुष सु इत्यलौकिकविग्रहे 'षष्ठी' इति सूत्रेण समासे सुब्लुकि अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेन आश्रित्य पदत्वान्नलोपे स्वादिकार्ये उक्तं रूपं सिद्धम् । न च लुका लुप्तत्वान्नात्र प्रत्ययलक्षणमिति वाच्यम्, पदत्वस्य सुब्घटितसमुदायधर्मवत्त्वे तस्य अङ्गकार्यत्वाऽभावात् ।

**सर्वश्वेतः** ( ई० ४४, ४८, ५१ )—सर्वेषां श्वेततरः इति विग्रहे 'गुणात्तरेण तरलोपश्चेति वाच्यम्' इति वार्तिकेन समासे तरप्प्रत्ययस्य लोपे सुब्लुकि च कृते स्वादिकार्ये 'सर्वश्वेतः' इति । बकानां गुणः इति शेषः । द्रव्यान्तरवृत्तिश्वेतरूपापेक्षया सर्वेषां बकानां श्वेतगुणोऽयमधिक इत्यर्थः । नन्वत्र 'षष्ठी' इति सूत्रेण समासे सिद्धे किमर्थं 'गुणात्तरेणे'ति वार्तिकमिति चेन्न, 'न निर्धारणे' 'पूरणगुण–' इति च षष्ठीनिषेधस्य बाधनार्थत्वेन तस्यावश्यकत्वात् ।

**सर्वमहान्** ( ई० ३०, ३२ )—सर्वेषां महत्तरः इति विग्रहे 'गुणात्तरेण–' इति वार्तिकेन समासे तरप्प्रत्ययलोपे सुब्लुकि च कृते समासत्वात् प्रातिपदिक-संज्ञायां सौ 'उगिदचाम्–' इति नुमि 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे सुलोपे संयोगान्तलोपे च कृते 'सर्वमहान्' इति। ईश्वर इति शेषः। इतरसम्बन्धिमहत्वापेक्षया ईश्वरस्य महत्वमधिकमित्यर्थः।

**सतां षष्ठः** ( ई० ५० )—षण्णां पूरणे षष्ठः। सतां षष्ठः इति विग्रहे 'षष्ठी' इति सूत्रेण समासे प्राप्ते 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति निषेधो भवति।

**ब्राह्मणस्य शुक्ला** ( ई० ५५ )—अत्र 'षष्ठी' इत्यनेन समासे प्राप्ते सति 'पूरणगुण–' इति निषेधो भवति। गुणस्योदाहरणमेतत्। न चात्र दन्ताः इति शेषपूरणेन ब्राह्मणस्य दन्ताः शुक्लाः इत्यर्थे ब्राह्मणशब्दस्य दन्तशब्देनैव अन्वयात् शुक्लशब्देन अन्वयाभावाद् असामर्थ्यात् कथं समासप्रवृत्तिरिति वाच्यम्, 'यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेवमुदाहरण'मिति मूले एवोक्तत्वात्।

**बुद्धिमान्द्यम्** ( ई० ४३ )—बुद्धेः मान्द्यं बुद्धिमान्द्यम्। 'षष्ठी' इति सूत्रेणाऽत्र समासः। न च 'पूरणगुण–' इत्यनेन 'काकस्य कार्ष्ण्यम्' 'ब्राह्मणस्य शुक्लाः' इत्यादौ यथा गुणेन समासनिषेधो भवति तथैव अत्राऽपि षष्ठीसमासनिषेधः कुतो नेति वाच्यम्, तदशिष्यं, 'संज्ञाप्रमाणत्वात्' (संज्ञायाः प्रमाणं = संज्ञाप्रमाणम्, तस्मात् संज्ञाप्रामाणत्वात्) इत्यादिनिर्देशेन गुणेन समासनिषेधोऽनित्यः इति ज्ञापनेनाऽदोषात्। अत एव 'अर्थगौरवम्' इत्याद्यपि सिद्धम्।

**पूरणगुणेति सूत्रे समानाधिकरणपदफलम्** ( ई० २३, ४५ )—पूरणगुणेति सूत्रे समानाधिकरणपदफलं तु 'तक्षकस्य सर्पस्य' इत्यत्र 'षष्ठी' इति सूत्रेण प्राप्तसमासस्य निषेध एव। नन्वत्र षष्ठीसमासस्य निषेधेऽपि 'विशेषणं विशेष्येण बहुलम्' इति विशेषणसमासः कुतो नेति वाच्यम्, तत्र बहुलग्रहणाद् विशेषणसमासाप्रवृत्तेः। 'गौर्धेनोः' इत्यादिष्वपि प्राप्तषष्ठीसमासस्य समानाधिकरणेनाऽनेन वार्यते। ननु षष्ठीसमास एवात्र न प्रसज्येत 'पोटायुवति–' इत्यादिना विशेषविहितकर्मधारयेणाऽत्र परस्यापि षष्ठीसमासस्य बाधितत्वादिति चेन्न, 'पोटायुवति–' इत्यादिविषया 'गौर्धेनुः' इत्यादिषु प्रथमाविभक्त्यन्तरेषु सावकाशाः

षष्ठीसमासस्तु 'राज्ञः पुरुषः' इत्यादौ असमानाधिकरणे सावकाशः 'गौर्धेनोः' इत्यादिषु उभयं प्राप्तं, तत्र 'पोटायुवति–' इत्यादिविधीन् बाधित्वा प्राप्तः षष्ठीसमासः समानाधिकरणग्रहणान्निषिध्यते । इति दिक् ।

**राज्ञां पूजितः** (ई० ५३)—राज्ञा पूज्यमान इत्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । अत्र 'क्तेन च पूजायाम्' इति सूत्रेण षष्ठीसमासस्य निषेधो भवति । न चैवं 'राजपूजितः, राजमतः, राजबुद्धः' इत्यादौ कथं समास इति वाच्यम्, तत्र भूते क्तान्तेन सह तृतीयान्तस्य समासविधानात् ।

**भवतः शायिका** (ई० ३९)—'स्त्रियां क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप् । 'कर्तृकर्मणोः' इति कर्तरि षष्ठी । अत्र 'कर्तरि च' इति निषेधान्न षष्ठीसमासः । ननु 'तृजकाभ्यां कर्तरि' इत्यनेनैव षष्ठीसमासनिषेधः कुतो नेति चेन्न, अकस्य कर्त्रर्थकत्वाऽभावात् । ननु पूर्वसूत्रे 'तृजकाभ्याम्' इति समस्तपदोपादानात् 'कर्तरि चे'ति सूत्रे कथमकस्यैवाऽनुवृत्तिः न तु तृचः इति चेन्न, तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् । अयम्भावः–तृचः कर्तरि विहितत्वेन 'स्रष्टा कृष्णः' इत्यादौ कर्तुः कृताभिहिततया तत्र कर्तरि षष्ठ्या एव अप्रसक्त्या तत्समासनिषेधस्य शशशृङ्गवदसम्भवपराहतत्वात् ।

**पूर्वकायः** (ई० ३०, ३४, ४९)—पूर्वं कायस्येति विग्रहे 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति सूत्रेण समासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां सौ 'परवल्लिङ्गम्–' इति पुंस्त्वे सति सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् । नन्वत्र 'षष्ठी' इति सूत्रेणैव समासे सिद्धे किमनेनेति चेन्न तथा सति षष्ठ्यन्तस्य समासविधौ प्रथमानिर्दिष्टत्वात् 'प्रथमानिर्दिष्टम्–' इति तस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपातः स्यात् ।

**अपरकायः** (ई० ४७)—अपरं कायस्येति विग्रहः । साधनप्रकारस्तु पूर्ववत् ।

**मध्याह्नः**—अह्नो मध्यमिति विग्रहे 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्यनेन समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति मध्यशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशे यणि विभक्तिकार्ये 'मध्याह्नः' इति । नन्वत्र कथमेकदेशिसमासः मध्यशब्दस्य पूर्वादिष्वनन्त-

भावादिति चेन्न, 'पूर्वादिभिन्नः सर्वोऽप्येकदेशोऽह्ना समस्यते' इति ज्ञापकस्य जागरूकत्वात्। तथा हि—'संख्याविसाय–' इति सूत्रेण सायशब्दपूर्वकस्य अह्नशब्दस्य अह्नादेशविकल्पः उक्तः, तत्र अह्नः सायः इति विग्रहे यदि सायशब्दस्य पूर्वाद्यप्रवृष्टत्वाद् अहन्शब्देन समासो न स्यात् तदा 'षष्ठी' इति सूत्रेण अहन्शब्दस्य षष्ठ्यन्तस्य सायशब्देन समासे सति षष्ठ्यन्तस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपाते सति सायशब्दात् परस्य अह्नशब्दस्य अह्नादेशविधानं निर्विषयं स्यात्। अतः 'पूर्वादिभिन्नः सर्वोऽप्येकदेशोऽह्ना समस्यते' इति विज्ञायते।

**मध्यरात्रः** ( ई० ५२, ५३ )—रात्रेर्मध्यमिति विग्रहे 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति सूत्रेण समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति मध्यशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'अहःसर्वैकदेश–' इत्यचि यणि विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। ननु 'संख्याविसाय–' इति ज्ञापकात् 'सर्वोऽप्येकदेशोऽह्ना समस्यते' इत्यप्युक्तं मूले प्राक्, युक्तश्चैतत्—'संख्याविसाय–' इति सूत्रे अहन्शब्दस्यैव उपात्ततया तदितरकालवाचिना सर्वस्यैकदेशस्य समासज्ञापनाऽनुपपत्तेरिति चेन्न, अहन्शब्देन सह सायशब्दस्य एकदेशिसमासं वा सिद्धवत्कृत्य सायशब्दाद् अह्नशब्दोपादानात् सर्वेणाऽपि अवयववृत्तिकालवाचिना सर्वस्यैकदेशस्य समासो ज्ञाप्यते—ज्ञापकस्य सामान्यापेक्षत्वात्। इति दिक्।

**अर्धपिप्पली** ( ई० ४३, ४५, ४८, ५०, ५५ )—अर्धं पिप्पल्याः इति विग्रहे 'अर्धं नपुंसकम्' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति समासशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य अर्धशब्दस्य उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'परवल्लिङ्गम्–' इति स्त्रीत्वात् ङीपि समासत्वात् सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम्।

न च विग्रहे पिप्पलीशब्दस्य नियतविभक्तितया 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनत्वात् 'गोस्त्रियोः–' इति ह्रस्वः कुतो नेति वाच्यम्, उपसर्जनसंज्ञासूत्रे 'एकविभक्तावषष्ठ्यन्तवचनम्' इति वार्तिकोक्तत्वात्। नन्वेवं पञ्चानां खट्वानां समाहारः 'पञ्चखट्वी' इत्यत्रापि 'एकविभक्तावि'ति वार्तिकनिषेधात् उपसर्जनत्वाभावेन ह्रस्वत्वाभावात् 'द्विगोः' इति ङीप् न स्यादिति चेन्न, 'अपथं नपुंसकम्' इति सूत्रे 'पञ्चखट्वी' इत्युदाहरणपरकभाष्येण 'एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः' इति कल्पनेनाऽदोषात्।

**प्राप्तजीविका** ( ई० ३८ )—'प्राप्तापन्ने च द्वितीयया' इति सूत्रे 'द्वितीयया अ' इति छेदः। ततश्च 'प्राप्तापन्ने द्वितीयया समस्यते, तयोरकारोऽन्तादेशश्च' इत्यर्थेन जीविकां प्राप्ता स्त्री इति विग्रहे प्रकृतसूत्रेण समासे प्राप्तापदस्याकारस्यान्तस्य स्थाने अकारे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति सूत्रेण समासशास्त्रघटकप्रथमान्तपद-निर्दिष्टस्य प्राप्तपदस्योपसर्जनसंज्ञायां पूर्वप्रयोगे स्त्रीत्वाट्टापि स्वादिकार्ये 'प्राप्तजीविका' इति सिद्धम्।

**द्व्यहजातः** ( ई० ३०, ३१ )—द्वयोरह्नोः समाहारः द्व्यहः। अत्र 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नष्टखोरेव' इति टिलोपे 'न संख्यादेः समाहारे' इति अह्नादेशप्रतिषेधे विभक्तिकार्ये 'द्व्यहः' इति। ततः द्व्यहो जातस्य यस्य स इति विग्रहे 'कालाः परिमाणिना' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति द्व्यहशब्दस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे विभक्त्यादिकार्ये 'द्व्यहजातः' इति।

**द्व्यह्नजातः** ( ई० ३९, ४०, ४१, ४६ )—द्वे अहनी जातस्य यस्य स इति विग्रहे 'उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्' इति वार्तिकेन त्रयाणां समासे सुब्लुकि 'द्वि अहन् जात' इति स्थिते जातशब्दे उत्तरपदे परे 'द्वि अहन्' इत्यनयोः 'तद्धितार्थ–' इति द्विगुसमासे 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे यणि समासत्वात् सौ रुत्वे विसर्गे 'द्व्यह्नजातः' इति। ननु द्वयोरह्नोः समाहारः 'द्व्यहः' इत्यत्रापि अह्नादेशः कुतो नेति चेन्न, 'न संख्यादेः समाहारे' इति निषेधस्य जागरूकत्वात्।

**अरण्येतिलकाः** ( ई० ४४ )—संज्ञाशब्दोऽयम्। अत्र 'संज्ञायाम्' इत्यनेन समासः 'हलन्तात् सप्तम्याः' इत्यलुक्।

**एकनाथः** ( ई० ४८, ४९ )—एकश्चासौ नाथश्चेति विग्रहे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासे सुब्लुकि विभक्त्यादिकार्ये 'एकनाथः' इति। ननु 'विशेषणं विशेष्येण बहुलम्' इत्यनेन समासे सिद्धे प्रकृतसूत्रे एकग्रहणं किमर्थमिति चेन्न, 'दिक्संख्ये संज्ञायाम्' इति संज्ञायामेवेति नियमबाधनार्थत्वेन तस्यावश्यकत्वात्।

**पुराणमीमांसकाः** ( ई० ३५ )—पुराणाश्च ते मीमांसकाश्चेति विग्रहे 'पूर्व-

कालैकसर्वजरत्पुराण–' इति समासे सुब्लुकि विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। 'विशेषणं विशेष्येण बहुलम्' इति समासे सति तु अन्यतरस्य पूर्वनिपातापत्तेः।

**तद्धितार्थोत्तरपदसमाहारे च** (ई० २७) अत्र सूत्रे एकापि सप्तमी विषयभेदाद् भिद्यते। तत्र तद्धितार्थेत्यंशे वैषयिकाधारत्वे वर्तते। उत्तरपदेत्यंशे सामीपिकमाधारत्वमादाय परसप्तमी पर्यवस्यति। समाहारांशे तु वाच्यतया आधारत्वे सप्तमी। पूर्वसूत्राद् 'दिक्संख्ये' इत्यनुवर्तते। ततश्च तद्धितार्थे विषये ( तद्धिते भविष्यति ) उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन समस्यते स तत्पुरुष इत्यर्थो भवति। तद्धितार्थे दिक्समासोदाहरणं 'पौर्वशालः' इति। उत्तरपदे परतः दिक्समासोदाहरणं 'पूर्वशालाप्रियः' इति। तद्धितार्थे संख्यातत्पुरुषस्योदाहरणं 'षाण्मातुरः' इति। उत्तरपदे परतः संख्यासमासोदाहरणं 'पञ्चगवधनः'इति।

**पौर्वशालः** (ई० ५१)—तद्धितार्थे दिक्समासोदाहरणमेतत्। पूर्वस्यां शालायां भवः इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुपि 'दिक्पूर्वपदात्संज्ञायां ञः' इति ञप्रत्यये 'यस्येति च' इत्याकारलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्।

**पूर्वशालाप्रियः** (ई० ४३, ५३)—उत्तरपदे परतः दिक्समासोदाहरणमेतत्। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे परे 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन पूर्वाशालेत्यनयोः तत्पुरुषसमासे सुब्लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वाशब्दस्य पुंवद्भावे विभक्त्यादिकार्ये 'पूर्वशालाप्रियः' इति। ननु बहुव्रीहिसमासे कृते सुपां लुप्तत्वाद् उत्तरपदे परतः पूर्वयोः किमनेन समासेनेति चेन्न, अत्रावान्तरतत्पुरुषे सति समासान्तोदात्तत्वेन लकाराकार उदात्तः स्यादिति दिक्।

**पञ्चगवधनः** (ई० ३१, ३६, ४६)—उत्तरपदे परतः संख्यातत्पुरुषस्योदाहरणमेतत्। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ कृते धनशब्दे उत्तरपदे परे पञ्चन्गोशब्दयोः 'तद्धितार्थ–' इति महाविभाषाधिकारात् विभाषया आवान्तरतत्पुरुषे प्राप्ते 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति वार्तिकेन नित्यसमासे सुब्लुकि प्रत्ययलक्षणेन पदत्वान्नलोपे 'गोरतद्धितलुकि' इति टचि अवादेशे एकदेशविकृतन्यायेन समुदायात् सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम।

**पापनापितः** (ई० ५० )—पापश्चाऽसौ नापितश्चेति विग्रहे 'पापाणके कुत्सितैः' इति समासे सुब्लुकि विभक्त्यादिकार्ये 'पापनापितः' इति। पापशब्दोऽत्र पापवति वर्तते। नन्वत्र विशेषणसमासेनैव सिद्धे किमर्थमनेन समासो विधीयत इति चेन्न विशेषणसमासमपवाद्य 'कुत्सितानि कुत्सनैः' इति प्राप्तसमासस्य अपवादनार्थेन 'पापाणके–' इति सूत्रस्यावश्यकत्वात्। अन्यथा नापितशब्दस्य प्रथमान्तपदनिर्दिष्टत्वेन पूर्वनिपातापत्तेः।

**घनश्यामः** ( ई० ४५, ५३ )—घन इव श्यामः इति विग्रहे 'उपमानानि सामान्यवचनैः' इति समासे सुब्लुकि विभक्तिकार्ये 'घनश्यामः' इति। अत्र घनशब्दो लक्षणया घनसदृशे रामे वर्तते, श्यामशब्दोऽपि रामे वर्तत इति सामानाधिकरण्यम्। इदमेव सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते। 'विशेषणं विशेष्येण बहुलम्' इत्यनेन तु नात्र समासः, उभयोरपि घन-श्यामशब्दयोः गुणवचनतया विशेषण-विशेष्यभावे कामचारात् खञ्जकुब्जः–कुब्जखञ्जः इति वदनियमः स्यात्।

**पूर्ववैयाकरणः** (ई० ३०)—पूर्वश्चासौ वैयाकरणः इति विग्रहे 'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' इति सूत्रेण समासे सुब्लुकि 'प्रथमानिर्दिष्टम्–' इति प्रथमान्तशास्त्रघटकप्रथमान्तपदनिर्दिष्टस्य पूर्वशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। विशेषणसमासेनैव सिद्धे किमर्थमिदमिति चेन्न, पूर्वादिशब्दस्य परनिपातापत्तेः।

**महानवमी** ( ई० ४४, ४६ )—महती चासौ नवमी चेति विग्रहे 'सन्महत्परमोत्कृष्टाः पूज्यमानैः' इति समासे सुब्लुकि 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति पुंवत्वे 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वे स्वादिकार्ये उक्तं रूपं जातम्।

**इभपोटा** ( ई० ५० )—पोटा चासौ इभी चेति विग्रहे 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' इति समासे तत्पुरुषसंज्ञायां च कृते सुब्लुकि 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति कर्मधारयसंज्ञायां 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति इभीशब्दस्य पुंवत्त्वे विभक्त्यादिकार्ये 'इभपोटा' इति। पोटा स्त्रीपुंलक्षणा। जातेः पूर्वनिपातनियमार्थमिदं सूत्रम्।

**इभयुवती** (ई० ५२ )—युवती चासौ इभी चेति विग्रहे 'पोटायुवति–' इत्यादिना समासे तत्पुरुषसंज्ञायां च कृते सुब्लुकि 'तत्पुरुषः समानाधिकरणः कर्मधारयः'

इति कर्मधारयसंज्ञायां 'पुंवत्कर्मधारय–' इति पुंवत्त्वे स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**गोधेनुः** ( ई० ३१ )—धेनुश्चासौ गौश्चेति विग्रहे 'पोटायुवति–' इत्यादिना समासे तत्पुरुषसंज्ञायां च कृते सुब्लुकि 'तत्पुरुषः समानाधिकरण–' इति कर्मधारयसंज्ञायां 'पुंवत्कर्मधारय–' इति पुंवत्त्वे उक्तं रूपं जातम् ।

**युवजरती** ( ई० ४३, ४७, ५४ )—युवतिश्चासौ जरती ( वृद्धा ) चेति विग्रहे 'युवा खलतिपलितवलिनजरतीभिः' इति सूत्रेण 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषाबलात् युवन्शब्देन युवतिशब्दस्यापि ग्रहणात् समासे सुब्लुकि 'पुंवत्कर्मधारय–' इति पुंवत्त्वे विभक्त्यादिकार्ये 'युवजरती' इति । अत्र युवत्यामेव जरतीधर्मोपालम्भेन तद्रूपारोपात् सामानाधिकरण्यम् ।

**कृष्णसारङ्गः** ( ई० ३० )—कृष्णश्चासौ सारङ्गश्चेति विग्रहे 'वर्णो वर्णेन' इति समासे सुब्लुकि विभक्त्यादिकार्ये 'कृष्णसारङ्गः' इति । सारङ्गश्चित्रवर्णवान् । कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम् ।

**कुमारश्रवणा** ( ई० ५३ )—कुमारी चासौ श्रवणेति विग्रहे 'कुमारः श्रवणादिभिः' इति सूत्रेण लिङ्गविशिष्टपरिभाषया समासे तत्पुरुषे च कृते सुब्लुकि 'पुंवत्कर्मधारय–' इति पुंवत्त्वे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् । ननु सूत्रे कुमारशब्दस्य स्त्रीलिङ्गस्यैव पाठात् कथमिह स्त्रीलिङ्गस्योदाहरणमिति चेन्न, श्रवणादिगणे श्रवणा प्रव्रजिता गर्भिणीत्यादिस्त्रीलिङ्गपाठस्यैव दर्शनात् ।

**राजान्तरम्** ( ई० ४७ )—अन्यो राजा राजान्तरम् । 'मयूरव्यंसकादयश्च' इति सूत्रेण निपातनादस्य सिद्धिः । अस्वपदविग्रहत्वादत्र नित्यसमासः । नित्यसमासत्वं च 'राजान्तरम्' इत्यस्य व्याख्यानादेव ज्ञेयम् । अत्र अन्तरशब्दस्य परनिपातः इति विशेषः ।

**उद्धरोत्सृजा** ( ई० ४० )—उद्धरकोठादुत्सृज देहीति यस्यां क्रियायां सा 'उद्धरोत्सृजा' उत्सृजेत्यस्य विवरणं देहीति । कोठादिति तूद्धरेत्यस्याकांक्षापूरणाय । 'एहीडादयोऽन्यपदार्थे' इति गणसूत्रेण निपातनादस्य सिद्धिः ।

**अनुपलब्धिः** ( ई० ५४ )—न उपलब्धिः इति विग्रहे 'नञ्' इति सूत्रेण समासे सुब्लुकि 'न लोपो नञः' इति नलोपे 'तस्मान्नुडचि' इति नुटि अनुबन्धलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**अविवादः** ( ई० ४५ )—न विवादः इति विग्रहे 'नञ्' इति सूत्रेण समासे सुब्लुकि 'नलोपो नञः' इति नलोपे विभक्तिकार्ये 'अविवादः' इति ।

**अपचसि त्वं जाल्म** ( ई० ४०, ४४ )—कुत्सितं पचसीत्यर्थः । अत्र न पचसि इति स्थिते 'नञो नलोपस्तिङ्क्षेपे' इति वार्तिकेन नलोपः । 'अपचसि' इत्यत्र 'अ' इति भिन्नं पदं तिङन्तेन समासाऽभावात् ।

**नगाः** ( ई० ५२ )—न गच्छन्तीति नगाः-पर्वताः । अत्र 'नगोऽप्राणिष्वन्य-तरस्याम्' इति सूत्रेण नस्य प्रकृतिभावः ।

**पदेकृत्य** ( ई० ५४ )—पदं कृत्वा इत्यर्थः । अत्र 'मध्ये पदे निवचने च' इति सूत्रेण गतिसंज्ञायां निपातनादेदन्तत्वे च कृते 'कुगतिप्रादयः' इति समासे 'समासेऽनञ्पूर्वे क्त्वोल्यप्' इति ल्यपि समुदायात् सौ अव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम् ।

**प्राध्वं कृत्वा** ( ई० ४२ )—अत्र प्रार्थनादिना आनुकूल्यकरणे प्राध्वमिति मान्तमव्ययम् । तेनाऽत्र 'प्राध्वं बन्धने' इति सूत्रेण नात्र गतिसंज्ञा । अत एव गतित्वाऽभावे समासाऽभावादत्र क्त्वाप्रत्ययस्य ल्यब्नेति ।

**अतिमालः** ( ई० ५३ )—अतिक्रान्तो मालामतिमालः । अत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकेन समासे सुब्लुकि 'एकविभक्ति चाऽपूर्वनिपाते' इति मालाशब्दस्योपसर्जनसंज्ञायाम् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे स्वादिकार्ये 'अतिमालः' इति ।

**निष्कौशाम्बिः** ( ई० ४७ )—निष्क्रान्तः कौशाम्ब्याः इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासे सुब्लुकि 'एकविभक्ति चापूर्वनिपाते' इत्यनेन कौशाम्बीशब्दस्योपसर्जनसंज्ञायां 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वे विभक्तिकार्ये उक्तं रूपं जातम् ।

**कुम्भकारः** ( ई० ४८, ५२ )—कुम्भं करोतीति विग्रहे 'कर्मण्यण्' इत्यनेन कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रपरत्वे स्वादिकार्ये 'कारः' इति । ततः कृद्योगे कर्मणि षष्ठीविधानात् कुम्भ अस् कार इत्यलौकिकविग्रहे 'उपपदमतिङ्' इति सूत्रेण समासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते 'कुम्भकारः' इति सिद्धं भवति ।

**गतिकारकेति** ( ई० ४६ )—अयम्भावः 'उपपदमतिङ्' इति सूत्रे 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रात् सुबिति प्रथमान्तपदं 'सह सुपा' इति सूत्रात् सुपेति तृतीयान्तं च पदमनुवर्तते। ततश्च 'उपपदं सुबन्तं सुबन्तेन सह समाससंज्ञकं भवति' इत्यर्थे तिङन्तेन सह समासे निषिद्धेऽतिङ्ग्रहणं व्यर्थं सत् 'सुपेति तृतीयान्तं पदं नानुवर्तते' इति ज्ञापयति। एवञ्च 'कुगतिप्रादयः' इति सूत्रे गतिग्रहणं पृथक्कृत्य तत्र अतिङ्ग्रहणस्यापकर्षणेन गतिसंज्ञकोऽतिङन्तेन सह समाससंज्ञको भवतीत्यर्थेन तत्रापि सुपेति तृतीयान्तपदस्य नानुवृत्तिः। इत्थञ्च 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषा सिद्धा भवति। फलं च 'व्याघ्री' इत्यादौ ङीप्सिद्धिः। अन्यथा गतीत्यादीनां सुबन्तेन समासे तु 'व्याघ्री' इत्यादौ स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमशः उपस्थितया सुपः प्राक् लिङ्गबोधकटापः प्रवृत्तौ 'व्याघ्री' इत्यस्य जातित्वाभावेन अदन्तत्वाभावेन च 'जातेरस्त्री' इति सूत्रेण ङीषः प्रवृत्तिर्न स्यात्।

**व्याघ्री** ( ई० ३०, ३२ )—व्याजिघ्रतीत्यर्थे 'सुपि स्थः' इत्यत्र सुपीति योगविभागात् के आतो लोपे 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति बलात्सुबुत्पत्तेः पूर्वमेव समासे जातित्वात् ङीषि 'व्याघ्रीति' सुबुत्पत्त्यनन्तरं समासे तु स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणोपस्थितिरिति बलात्पूर्वमेव टापि, ततः समासे उक्तरूपासिद्धेः।

**अश्वक्रीती** ( ई० ३०, ४३, ५४ )—कारकस्योदाहरणमेतत्। अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति समासे सुब्लुकि 'क्रीतात् करणपूर्वात्' इति ङीषि विभक्तिकार्ये 'अश्वक्रीती' इति। अत्र 'कर्तृकरणे–' इति विहितः समासः यदि क्रीतशब्दस्य सुबन्ततामपेक्ष्येत तर्हि सुबुत्पत्तये संख्याद्यपेक्षेत। ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण–' इति ङीष् न स्यात्, अतः 'गतिकारके'ति परिभाषया कृतैव समास इति बोध्यम्।

**कच्छपी** ( ई० ४५ )—उपपदसमासोदाहरणमेतत्। कच्छ = तीरं, तेन तस्मिन् वा पिबतीति कच्छपी। अत्र पाधातोः 'सुपि स्थः' इत्यत्र सुपीतियोगविभागात् कप्रत्यये 'आतो लोप इटि च' इत्यालोपे उपपदसमासे सुब्लुकि कच्छपशब्दो निष्पद्यते। तत्र यदि 'उपपदमतिङ्' इति समासविधाने 'प'शब्दस्य सुबन्तत्वमपेक्ष्येत तर्हि स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्, सुबुत्पत्तये लिङ्गसंख्याकारकाणां

क्रमेणाऽपेक्ष्यत्वात्। ततश्च लिङ्गयोगे सति अदन्तत्वात् टाप् स्यात्, न तु जातिलक्षणो ङीष्, 'प'शब्दमात्रस्य जातिवाचकत्वाऽभावात्। ततः 'पा'शब्देन सुबन्तेन समासे सति 'कच्छपा'शब्दस्य अदन्तत्वाभावात् जातिलक्षणो ङीष् न स्यात्। सुबुत्पत्तेः प्रागेव कृदन्तेनैव समासे तु लिङ्गयोगे 'कच्छप'शब्दस्य जातिवाचकत्वात् जातिलक्षणे ङीषि 'कच्छपी' इतीष्टं रूपं सिद्ध्यति।

**मूलकोपदंशम्** ( ई० ५२ )—मूलकेन उपदंशं भुङ्क्ते-मूलकोपदंशम्। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इत्यनेनात्र समासे सुब्लुकि गुणे समासत्वात् सौ परवल्लिङ्गमित्युक्त्या अमन्तेनाऽव्ययेन समासे सति समुदायस्य अव्ययत्वात् सोर्लुकि उक्तं रूपं सिद्धम्।

**उच्चैःकृत्य** ( ई० ४४ )—अत्र 'क्त्वा च' इति सूत्रेण समासे सति ल्यपि 'उच्चैःकृत्य' इति। समासाभावे तु 'उच्चैः कृत्वा' इति भवति। न च 'उपदंशस्तृतीयायाम्' इति सूत्रात् प्रागेव 'समानकर्तृकयो'रिति क्त्वाविधेः पाठात् कथमिदमुदाहरणमिति वाच्यम्, 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इत्यनेनाऽत्र क्त्वाविधानात्।

**द्व्यङ्गुलम्** ( ई० ५१ )—द्वे अङ्गुली प्रमाणमस्येति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच्प्रत्यये 'द्विगोर्नित्यम्' इति तस्य लुकि यणि 'द्व्यङ्गुलि' इति, तस्माद् द्व्यङ्गुलिशब्दात् 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यचि 'यस्येति च' इति इकारलोपे विभक्त्यादिकार्ये 'द्व्यङ्गुलम्' इति। दारु इति शेषः।

**अहोरात्रः** ( ई० ४८ )—अहश्च रात्रिश्चेति विग्रहे द्वन्द्वसमासे कृते 'अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यचि 'यस्येति च' इति इकारलोपे 'जातिरप्राणिनाम्' इत्येकवद्भावे 'स नपुंसकम्' इति बाधित्वा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्।

**उत्तमाहः** ( ई० ५३ )—उत्तमं च तदहश्चेति विग्रहे विशेषणसमासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नष्टखोरेव' इति टिलोपे सवर्णदीर्घे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे विभक्त्यादिकार्ये 'उत्तमाहः' इति सिद्धम्।

(क) **द्व्यह्ना** ( ई० ४१, ४३ )—द्वयोरह्नोर्भवः इत्यर्थे 'तद्धितार्थोत्तरपद-

समाहारे च' इति समासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे यणि स्त्रियामदन्तत्वाट्टापि विभक्त्यादिकार्ये 'द्व्यह्ना' इति। टचष्टित्वेन 'टिड्ढे'ति ङीप् तु नाशङ्क्यः, तद्धितार्थम्प्रत्युपसर्जनत्वात्। नन्वत्र 'कालाट्ठञ्' इति विहितस्य ठञः 'द्विगोर्लुगनपत्ये' इति लुक्यपि प्रत्ययलक्षणेन आदाय 'टिड्ढे'ति ङीप् कुतो नेति चेन्न, ठञो योऽकारस्तदन्तादिति भाष्यसम्मतेऽर्थे वर्णाश्रयत्वेन 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधात्। 'द्विगोः' इति ङीप् तु 'अपरिमाणविस्ताचित-' इति निषेधादेव नेति तत्त्वम्।

(ख) **द्व्यह्ना**—द्वयोरह्नोर्भवः इत्यर्थे 'तद्धितार्थे'ति समासे सुब्लुकि 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'कलाट्ठञ्' इति ठञि तस्य 'द्विगोर्लुगनपत्ये' इति लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नोह्न एतेभ्यः' इत्यह्नादेशे यणि स्त्रियामदन्तत्वाट्टापि समासत्वात् सौ हल्ङ्यादिलोपे 'द्व्यह्ना' इति। न च 'रात्राह्नाहाः पुंसि' इत्युक्तत्वात् कथमत्र स्त्रीत्वमिति वाच्यम्, सर्वमहः 'सर्वाह्नः' इत्यादौ उपक्षीयमाणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः। किञ्च 'द्विगुप्राप्तापन्ने'ति परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः पुंसि' इत्यस्याप्रवृत्तेः। एवञ्चात्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाऽभिधायी' इति न्यायेन भवार्थवत् तन्निष्ठस्त्रीत्वाभिधानं न्याय्यमेव। नन्वेवं प्रत्ययलक्षणेन ठञन्तत्वात् 'टिड्ढाणञ्-' इति ङीप् कुतो नेति चेन्न, ठञो योऽकारस्तदन्तादिति भाष्यसम्मतेऽर्थे वर्णाश्रयत्वेन 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति प्रत्ययलक्षणप्रतिषेधात्। न च टजन्तत्वात् ङीप् स्यादेवेति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थं प्रत्युपसर्जनत्वात्। 'द्विगोः' इति ङीप् तु न शङ्क्यः, 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति निषेधात्।

**द्व्यह्नप्रियः** ( ई० ३४, ३८ )—द्वे अहनी प्रिये यस्येति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'अह्नोह्न एतेभ्यः' इति अह्नादेशे यणि 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे समासत्वात् सौ रुत्वे विसर्गे च कृते उक्तं रूपं सिद्धम्।

**दीर्घाह्नी प्रावृट्** ( ई० ४५ )—दीर्घाणि अहानि यस्यामिति विग्रहे बहुव्रीहिसमासे सुब्लुकि सवर्णदीर्घे 'ऋन्नेभ्यो ङीप्' इति ङीपि 'अल्लोपोऽनः' इति अकारलोपे 'क्षुभ्नादिषु च' इति णत्वनिषेधे विभक्त्यादिकार्ये 'दीर्घाह्नी' इति। न चात्र 'अह्नोऽदन्तात्' इति सूत्रे 'अह्नः' इति पदमदन्ताऽहन्शब्दस्यानुकरणम्। ततश्च

यत्राऽहनशब्दोऽदन्तः तत्रैव 'अह्नोऽदन्तात्' इति णत्वं स्यात्। एवञ्च प्रकृते अदन्तत्वाऽभावेन णत्वाऽप्राप्त्या 'क्षुम्नादिषु' दीर्घाह्नीशब्दपाठो निष्फल इति वाच्यम्, 'अह्नोऽदन्तात्' इति सूत्राऽप्रवृत्तावपि 'प्रातिपदिकान्त-' इति सूत्रेण प्राप्तस्य णत्वस्य वारणार्थं क्षुभ्नादिषु दीर्घाह्नीशब्दपाठस्यावश्यकत्वात्।

**सुदिनाहम्** ( ई० ५३ )—सुदिनमहः इति विग्रहे विशेषणसमासे सुब्लुकि सवर्णदीर्घे 'राजाहस्सखिभ्यष्टच्' इति टचि टिलोपे 'उत्तमैकाभ्यां च' इत्यह्नादेश-निषेधे 'पुण्यसुदिनाभ्यां च' इति नपुंसकत्वे समासत्वात् सौ सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**संख्याताहः** ( ई० ४७ )—संख्यातमहः इति विग्रहे विशेषणसमासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि टिलोपे सवर्णदीर्घे उत्तमैकाभ्यां च' इति सूत्रे उत्तमग्रहणमुपान्त्यस्यापि सङ्ग्रहार्थमिति वादिमते अह्नादेशनिषेधे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे विभक्त्यादिकार्ये उक्तं रूपं जातम्।

**आकर्षश्वः** ( ई० ३३ )—आकृष्यते कुसूलादिगतधान्यमनेनेति 'आकर्षः'। आकर्षः श्वा इवेति विग्रहे 'उपमितं व्याघ्रादिभिः' इति समासे सुब्लुकि 'उपमानाद-प्राणिषु' इति टचि टिलोपे विभक्त्यादिकार्ये उक्तं रूपं निष्पन्नम्।

**अर्धनावम्** ( ई० ३६ )—नावः अर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टम्—' इत्यर्धशब्दस्योपसर्जनत्वात् पूर्वप्रयोगे 'अर्धाच्च' इत्यनेन टचि अवादेशे 'परवल्लिङ्गम्-' इति स्त्रीत्वे प्राप्तेऽपि लोकात् क्लीबत्वे समासत्वात् सौ सोरमि पूर्वरूपे उक्तं रूपं सम्पन्नम्।

**आन्महतः** ( ई० ४९ )—महतः अकारोऽन्तादेशः स्यात् समानाधिकरणे उत्तरपदे जातीये च परे इत्यर्थः। अत्र सूत्रे समानाधिकरणग्रहणसामर्थ्यात् 'लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषा न प्रवर्तते। अत एव 'महाबाहुः' इत्यस्य सिद्धिर्भवति। अन्यथा महान्तौ बाहू यस्येति विग्रहे निष्पन्नस्य बहुव्रीहिसमासस्य 'अनेकमन्यपदार्थे' इति सामान्यविहितत्वेन प्रतिपदोक्तत्वाऽभावाद् उत्तरपदे परे आत्वं न स्यात्। 'प्रागेकादशभ्यः' इति सूत्रनिर्देशादत्र सूत्रे 'आत्' इति योगविभागोऽपि। अत एव एकश्च दश च, एकाधिका दशेति वेति विग्रहे 'एकादश' इति सिद्धं भवति।

**महाब्रह्मः**—महांश्चासौ ब्रह्मा चेति विग्रहे 'सन्महत्परमोत्कृष्टाः पूज्यमानैः' इत्यनेन समासे सुब्लुकि 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वे सवर्णदीर्घे 'कुमहद्भ्यामन्यतरस्याम्' इति टचि टिलोपे 'परवल्लिङ्गम्–' इति पुंस्त्वे समासत्वात् सौ रुत्वे विसर्गे च 'महाब्रह्मः' इति । टजभावे 'महाब्रह्मा' इति भवति ।

**अष्टगवम्** ( ई० ४६ )—अष्टानां गवां समाहारः इति विग्रहे 'तद्धितार्थोत्तर-पदसमाहारे च' इति समासे सुब्लुकि समाहारद्विगोस्तत्पुरुषत्वात् 'गोरतद्धितलुकि' इति टचि अवादेशे विभक्त्यादिकार्ये 'अष्टगवम्' इति । 'गवि च युक्ते' इत्यात्वं तु न युक्तार्थस्य अलाभात् ।

**अष्टागवम्**—अष्टौ गावो यस्मिन्निति विग्रहे बहुव्रीहिसमासे 'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' इति सूत्रे अजिति योगविभागेन अच्प्रत्यये 'गवि च युक्ते' इति वार्तिकेन आत्वे अवादेशे विभक्त्यादिकार्ये 'अष्टागवम्' इति शकटमिति शेषः । किञ्च अष्टानां गवां समाहारः 'अष्टगवम्' । अष्टगवमस्त्यस्मिन्निति विग्रहे 'अर्श आदिभ्योऽच्' इत्यचि कृते युक्तार्थो गम्यते । ततश्च 'गवि च युक्ते' इत्यात्वे 'अष्टागवम्' इति सिद्ध्यति । एवञ्च अष्टागवम्' इत्यस्य द्विविधसाधनप्रकार इति बोध्यम् ।

**द्वादश** ( ई० ४२ )—द्वौ च दश चेति विग्रहे द्वन्द्वसमासे 'द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः' इत्यात्वे विभक्त्यादिकार्ये 'द्वादश' इति ।

**षोडश** ( ई० ४९, ५३ )—षट् च दश चेति विग्रहे समाहारद्वन्द्वे 'षष उत्त्वं दतृदशधासूत्तरपदे ष्टुत्वं च धासु वेति वाच्यम्' इति वार्तिकेन अन्त्यस्य षकारस्य उत्त्वे गुणे दकारस्य ष्टुत्वेन डकारे उक्तं रूपं सिद्धम् ।

**द्व्यहः** ( ई० ३३ )—द्वयोरह्नोः समाहारः इति विग्रहे 'तद्धितार्थोत्तरपद-समाहारे च' इति द्विगुसमासे सुब्लुकि 'राजाहस्सखिभ्यष्टच्' इति टचि 'न सङ्ख्यादेः समाहारे' इत्यह्नादेशनिषेधे यणि 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे स्वादिकार्ये 'द्व्यहः' इति ।

**पञ्चमूली** ( ई० ५० )—पञ्चानां मूलानां समाहारः इति विग्रहे 'तद्धितार्थे'ति द्विगुसमासे सुब्लुकि 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वार्तिकेन स्त्रीत्वे द्विगोः' इति ङीपि स्वादिकार्ये 'पञ्चमूली' इति सिद्धम् ।

**पञ्चतक्षी** ( ई० ३६ )—पञ्चानां तक्ष्णां समाहारः इति विग्रहे 'तद्धितार्थे'ति द्विगुसमासे सुब्लुकि 'अनो नलोपश्च वा द्विगुस्त्रियाम्' इति वार्तिकेन स्त्रीत्वे नलोपे 'द्विगोः' इति ङीपि विभक्त्यादिकार्ये 'पञ्चतक्षी' इति। स्त्रीत्वाभावपक्षे नलोपे 'स नपुंसकम्' इति नपुंसकत्वे विभक्तिकार्ये 'पञ्चतक्षम्' इति। प्रकृतवार्तिके वाग्रहणं स्त्रियामित्यनेनैव सम्बद्ध्यते न तु नलोपेऽपि तेन स्त्रीत्वाऽभावेऽपि नलोपो भवत्येवेति।

**त्रिपथम्** ( ई० ४१, ४२ )—त्रयाणां पन्थास्त्रिपथम्। अत्र समासे सति 'ऋक्पूरब्धूः पथामानक्षे' इति सूत्रेण अप्रत्यये टिलोपे 'पथः सङ्ख्याव्ययादेः' इति क्लीबत्वे सोरमि पूर्वरूपे 'त्रिपथम्' इति।

**नन्दोपक्रमम्** ( ई० ४३, ५३ )—नन्देन आरभ्यमाण इत्यर्थः। अत्र कर्तरि षष्ठ्याः समासे सुब्लुकि 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति सूत्रेण नपुंसकत्वे समासत्वात् सौ सोरमि पूर्वरूपे उक्तं रूपं निष्पन्नम्

**पिशाचसभम्** ( ई० ४६, ५१ )—पिशाचानां सभेति विग्रहे षष्ठीसमासे सुब्लुकि 'सभाराजाऽमनुष्यपूर्वा' इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति सभाशब्दाकारस्य ह्रस्वत्वे समासत्वात् सौ सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**धर्मसभा** ( ई० ४४ )—अत्र सभाशब्दः शालायां वर्तते। तेन 'अशाला च' इत्यनेन 'स्त्रीसभम्' इति वदत्र क्लीबत्वं न भवति।

इति तत्पुरुषः

---

## अथ बहुव्रीहिः

**शेषो बहुव्रीहिः** ( ई० ४५ )—अत्र शेषपदार्थः कः इति चेदुच्यते–द्वितीयाश्रितेत्यादिना यस्य ( त्रिकस्य ) विशेष्यसमासो नोक्तः स 'शेषः'। प्रथमान्त इत्यर्थः। ननु 'विशेषणं विशेष्येण बहुलम्' इत्यनेनैव प्रथमायाः अपि समासविहितत्वेन शेषविभक्तिर्दुर्लभ इति चेन्न, विशेषणसमासस्य वस्तुतः प्रथमाविभक्तौ प्रवृत्तावपि प्रथमाविभक्तिं विशिष्य ( उच्चार्य ) विधानाभावात्। एवञ्च समासविधिषु विशिष्यनिर्दिष्टद्वितीयादिविभक्तिषट्कापेक्षया 'शेषः' प्रथमाविभक्तिरिति तत्त्वम्। वृत्तिकारास्तु 'यत्राऽन्यः समासो नोक्तः स शेषः' इत्याहुः।

**ऊढरथोऽनड्वान्** ( ई० ५० )—ऊढः रथः येनेति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि समासत्वात् सौ रुत्वे विसर्गे 'ऊढरथः' इति । तृतीयार्थबहुव्रीहेरुदाहरणमेतत् ।

**वीरपुरुषको ग्रामः** ( ई० ४२ )—वीराः पुरुषाः यस्मिन् ग्रामे इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'शेषाद्विभाषा' इति कपि समासत्वात् सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम् । सप्तम्यर्थबहुव्रीहेरुदाहरणमेतत् ।

**चित्रगुः** ( ई० ३०, ३४, ४८, ४९ )—चित्रा गावो यस्येति लौकिकविग्रहे 'चित्रा अस् गो अस्' इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' इति चित्राशब्दस्य पुंवद्भावात् टापो निवृत्तौ 'एकविभक्ति चापूर्वनिपाते' इत्यनेन गोशब्दस्योपसर्जनसंज्ञायां 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे विभक्त्यादिकार्ये 'चित्रगुः' इति सिद्धम् ।

**जरतीचित्रागुः** (ई० ३०, ४१ ४६,)—चित्रा जरती गौर्यस्येत्यर्थे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'सप्तमीविशेषणे बहुव्रीहौ' इति बलाद् विशेषणयोः पर्यायेण पूर्वप्रयोगे 'गोस्त्रियोः–' इति ह्रस्वे 'चित्राजरतीगुः' 'जरतीचित्रागुः' इति वेति सिद्धम् । अत्र 'स्त्रियाः पुंवत्–' इति पुंवद्भावस्तु नाशङ्क्यः पूर्वपदस्य मध्यमेन व्यवधानात्, मध्यमस्य च पूर्वपदत्वाऽभावात्, उत्तरपदस्य समासचरमावयवे, पूर्वपदशब्दस्य च समासप्रथमावयवे रूढत्वादिति केचित् । वस्तुतस्तु 'आनङ् ऋतो द्वन्द्वे' इत्यत्र इव अत्रापि उत्तरपदेन पूर्वपदाक्षेपाभावात् मध्यमपदस्य पुंवत्वं स्यादेव। अत एव कर्मधारयोत्तरपदकबहुव्रीहौ 'चित्राजरद्गवीकः' कर्मधारयोपपदकबहुव्रीहौ 'जरच्चित्रगुः' इति भाष्योक्तं सङ्गच्छते ।

**कल्याणीपञ्चमाः**—कल्याणी पञ्चमी यासां रात्रीणामिति विग्रहे उद्भूतावयवभेदविवक्षया पञ्चमीशब्दः प्रधानम् । पूरणप्रत्ययान्तश्चेति 'अप्पूरणीप्रियादिषु' इति पुंवद्भावप्रतिषेधे 'अप्पूरणीप्रमाण्योः' इत्यपि ईकारलोपे च प्रयोगः सिद्ध्यति । कल्याणपञ्चमीकपक्षे तु तिरोहितावयवभेदविवक्षया पञ्चमीपदार्थः प्रधानं न भवतीति पुंवद्भावप्रतिषेधोऽप्रत्ययश्च न भवति । उद्भूतावयवभेदविवक्षायां समासघटकतया यावन्ति पदानि सन्ति तेषां सर्वेषामर्थः प्रधानं भवति । तिरोहितावयवभेदविवक्षायान्तु समासघटकपदानामर्थः प्रधानं न भवति, किन्तु अन्यपदार्थ एव प्रधानं भवतीति दिक् ।

**कल्याणपञ्चमीकः पक्षः** ( ई० ५१, ५२ )—कल्याणी पञ्चमी यस्य पक्षस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुब्लुकि सति व्यपदेशिवत्त्वेन 'पञ्चम्युत्तरपदस्य नद्यन्तत्वात् 'नद्यृतश्च' इत्यनेन उत्तरपदकबहुव्रीहेः कपि 'केऽणः' इति ह्रस्वे प्राप्ते 'न कपि' इति निषेधे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। अत्र पूरण्या रात्रेरन्यपदार्थप्रवेशाभावाद् अप्राधान्याद् 'अप्पूरणीप्रमाण्योः' इति अप्प्रत्ययाभावे सति 'नद्यृतश्चे'ति कप्प्रत्ययो विहितः। नन्वत्र पञ्चदशाहोरात्रात्मके पक्षे अन्यपदार्थे पञ्चम्याः रात्रेः प्रवेशात् प्राधान्यं दुर्वारमिति चेन्न, अत्र तिरोहितावयवभेदस्य पक्षस्याऽन्यपदार्थतया रात्रेरप्रधानात्।

**बहुशः** ( ई० ४३ )—बह्वीभ्यो देहि इत्यर्थे 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इत्यनेन शस्प्रत्यये 'शसि बह्वाल्पार्थस्य पुंवद्भावो वक्तव्यः' इति वार्तिकेन पुंवत्वे ङीषो निवृत्तौ विभक्त्यादिकार्ये 'बहुशः' इति। सम्प्रदानकारकत्वस्फोरणाय मूले देहीति शब्दः प्रयुक्तः।

**सपत्नीशब्दस्त्रिधा**—अयम्भावः-सपत्नीशब्दः प्रकारत्रयेण सिद्ध्यति। तथाहि शत्रुवाचकसपत्नीशब्दात् शार्ङ्गरवादित्वात् ङीनि सति एकः। समानः पतिर्यस्याः इति विग्रहे 'नित्यं सपत्न्यादिषु' इति नकारे ङीपि च कृते नित्यस्त्रीलिङ्गो द्वितीयः। समानः पतिः ( रक्षकः ) यस्याः इति विग्रहे भाषितपुंस्कः तृतीयः। तथा च शिवादिगणे प्रथमद्वितीययोः रूढिशब्दयोरेव ग्रहणेन अण्प्रत्यये 'सापत्नः' इति भवति। भाषितपुंस्कात् सपत्नीशब्दात्तु 'दित्यादित्य—' इति ण्यप्रत्यये 'भस्याढे तद्धिते' इति पुंवद्भावे 'यस्येति च' इति इकारलोपे 'सापत्यः' इति रूपं भवति। यदा कस्यचित् प्रभोः स्त्रीपुरुषौ द्वावपि किङ्करौ स्तः, तदा सपतिशब्दः स्त्रीपुरुषयोर्द्वयोरपि वाचक इति भाषितपुंस्कत्वं तस्येति दिक्।

**सापत्नः** ( ई० ४४, ४७, ५५ )—सपत्न्या अपत्यमित्यर्थे शत्रुपर्यायं विवाहनिबन्धनञ्च पतिशब्दमाश्रित्य प्रवृत्ताभ्यां सपत्नीशब्दाभ्यां 'तस्यापत्यम्' इत्यणं बधित्वा 'स्त्रीभ्यो ढक्' इति ढकि प्राप्ते तमपि प्रबाध्य 'शिवादिभ्योऽण्' इत्यणि आदिवृद्धौ आद्यस्य सपत्नीशब्दस्य भाषितपुंस्कतया पुंवत्वे ङीपो निवृत्तौ विभक्तिकार्ये 'सापत्नः' इति रूपम्। नकारस्य तु न निवृत्तिः शत्रुपर्यायसपत्नशब्दस्य अव्युत्पन्नप्रातिपदिकतया तत्र नकारस्य स्त्रीत्वनिमित्तकत्वाभावात्। द्वितीयस्यापि सपत्नीशब्दस्य ङीबन्तत्वाभ्या-

मुत्पन्नस्य शिवाद्यणि कृते भाषितपुंस्कत्वाऽभावात् पुंवत्त्वाऽभावेपि ङीपो 'यस्येति च' इति लोपे 'सापत्नः' इत्येव रूपं भवति।

( सपत्न्या अपत्यमित्यर्थे स्वामिपर्यायं पतिशब्दमाश्रित्य प्रवृत्तात् सपत्नीशब्दात्तु 'तस्यापत्यम्' इत्यणं बाधित्वा 'दित्यदित्यादित्यपत्युत्तरपदाण्यः' इति ण्यप्रत्यये कृते सपत्नीशब्दस्य भाषितपुंस्कत्वात् पुंवत्वे सति ङीब्नत्वयोर्निवृत्तौ 'यस्येति च' इतीकारलोपे 'सापत्यः' इति रूपं भवति। नचाऽत्र 'शिवाद्यण्' इति कथं नेति वाच्यम्, शिवाद्यादौ रूढयोरेव ग्रहणात्। शत्रुपर्यायं पतिशब्दमाश्रित्य प्रवृत्तसपत्नशब्दो रूढः। विवाहनिबन्धनं पतिशब्दमाश्रित्य प्रवृत्तस्तु केवलयौगिकः। )

**अद्वन्द्वतत्पुरुष इति** ( ई० ३८, ४१ )—त्यदादीनां स्त्रीशेषेऽपि सहविवक्षितेषु यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादिकानि भवन्ति, कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव, इत्यर्थक–'त्यादादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इति वार्तिकस्याऽपवादोऽयम् 'अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्' इति। द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां स्त्रीशेषे त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी' त्येतन्न भवतीत्यर्थः। तेन द्वन्द्वे–अयं च इयं च इमे इति 'कुक्कुटमयूर्याविमे' इत्यत्र 'त्यदादितः शेषे' इति पुंल्लिङ्गत्वं न भवति, किन्तु विशेष्यनिघ्नतैव।

**कुक्कुटाण्डम्** ( ई० ३६ )—कुक्कुट्याः अण्डमिति विग्रहे षष्ठीतत्पुरुषसमासे सुब्लुकि सति 'कुक्कुट्यादीनामण्डादिषु' इति वार्तिकेन कुक्कुटीशब्दस्य पुंवद्भावात् जातिलक्षणङीषो निवृत्तौ सवर्णदीर्घे विभक्तिकार्ये 'कुक्कुटाण्डम्' इति निष्पन्नं भवति।

**पाचिकाभार्यः** ( ई० ५२ )—पाचिका भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे प्राप्ते 'न कोपधायाः' इति निषेधे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। पुंवत्त्वे तु टाबित्त्वयोर्निवृत्तिः स्यात्।

**रसिकाभार्यः** ( ई० ४० )—रसिका भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्वे प्राप्ते 'न कोपधायाः' इति निषेधे विभक्त्यादिकार्ये उक्तं रूपं जातम्। पुंवत्त्वे तु टापो निवृत्तिः स्यात्।

**पाकभार्यः** ( ई० ५३ )—पाका भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे विभक्त्यादिकार्ये 'पाकभार्यः

इति । 'न कोपधायाः' इति पुंवत्त्वनिषेधस्तु न, तत्र 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' इति वार्तिकोक्तत्वात् । पाकेति 'अर्भकपृथुकपाका वयसि' इत्युणादिषु कप्रत्ययान्तो निपातितः ।

**दत्ताभार्यः** ( ई० ३५ )—दत्ता भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे प्राप्ते 'संज्ञापूरण्योश्च' इति निषेधे विभक्त्यादिकार्ये उक्तं रूपं निष्पन्नम् । नन्वत्र दत्ताशब्दस्य संज्ञात्वेन एकद्रव्यनिवेशितया भाषितपुंस्कत्वाऽभावात् कथं पुंवत्त्वं प्राप्तमिति चेन्न, दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वात् ।

**मध्यमभार्यः** ( ई० ४० )—मध्ये भवा मध्यमा । 'मध्यान्मः' इति मः । मध्यमा भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे विभक्त्यादिकार्ये 'मध्यमभार्यः' इति । अत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवत्त्वनिषेधस्तु न, मप्रत्ययस्य तद्धितस्य वृद्धिनिमित्तत्वाभावात् ।

**वृद्धिशब्देनेति** ( ई० ३८, ४१, ५५ )—अयम्भावः-वैयाकरणी भार्या यस्येत्यर्थे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे विभक्त्यादिकार्ये **'वैयाकरणभार्यः'** इति सिद्ध्यति । नन्वत्र व्याकरणमधीते वेत्ति वा स्त्रीति विग्रहे 'तदधीते तद्वेद' इति अणादिप्रत्यये कृते 'वैयाकरणी' इति भवति ततश्च आदिवृद्धेः 'न य्वाभ्याम्–' इति निषेधोऽपि अणः तद्धितस्य णित्वेन वृद्धिनिमित्तत्वानपायात् 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवत्त्वनिषेधो दुर्वार इति चेन्न, 'प्रवाहणस्य ढे' इति सूत्रस्थभाष्येण, सूत्रे निमित्तग्रहणेन च फलोपहितनिमित्तस्यैवाऽत्र ग्रहणमिति बोधनेनाऽदोषात् । तदेवोक्तं मूले वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह न पुंवदिति ।

**सौवश्वभार्यः** ( ई० ३८ )—अस्योत्तरं पूर्ववद् देयम् ।

**उपदशाः** ( ई० २०, २४, ४५, ५०, ५२ )—दशानां समीपे ये सन्तीति विग्रहे 'संख्याव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति सूत्रेण समासे सुपो लुकि 'प्रथमानिर्दिष्टम्–' इत्यनेन उपेत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति डचि डित्वाट्टिलोपे विभक्त्यादिकार्ये

'उपदशाः' इति । समीपार्थकस्यैव उपशब्दस्य अव्ययीभावः उक्तः । इह तु समीपवर्तिनि उपशब्दो वर्तत इति नाव्ययीभावः । अत एवोक्तं मूले 'नव एकादश वेत्यर्थः'। अव्ययस्योदाहरणमेतत् ।

**आसन्नविंशाः** ( ई० ५२ )—विंशतेरासन्नाः इत्यर्थः । विंशतिसंख्यासन्नसंख्यावन्तः इति यावत् । अत्र 'संख्याव्यया-' इति समासे सुपो लुकि 'प्रथमानिर्दिष्टम्-' इति आसन्नशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डचि 'आसन्नविंशति अ' इति स्थिते डित्वाट्टिलोपे सवर्णदीर्घं बाधित्वा 'अतो गुणे' इति पररूपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**अदूरत्रिंशाः** ( ई० ४१ )—त्रिंशतः अदूरा इति विग्रहे 'सङ्ख्याव्यया-' इति समासे सुपो लुकि 'प्रथमानिर्दिष्टम्-' इति अदूरशब्दस्योपसर्जनसंज्ञायां पूर्वप्रयोगे 'बहुव्रीहौ संख्येये-' इति डचि डित्वाट्टिलोपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् । त्रिंशत्संख्यायाः अदूरसंख्यावन्तः इत्यर्थः ।

**पञ्चषाः** (ई० ४१ )—पञ्च वा षड् वा इति विग्रहे 'संख्याव्यया-' इति समासे सुब्लुकि 'बहुव्रीहौ सङ्ख्येये-' इति डचि टिलोपे विभक्त्यादिकार्ये 'पञ्चषाः' इति सिद्धम् ।

**दक्षिणपूर्वा** ( ई० ३२ )—दक्षिणस्याश्च पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । अत्र 'दिङ्नामान्यन्तराले' इति सूत्रेण समासे सुपो लुकि विभक्त्यादिकार्ये 'दक्षिणपूर्वा' इति सिद्धं भवति ।

**तत्र तेनेदमिति** ( ई० ३९ )—'तत्रे'त्यनेन 'सप्तम्यन्ते पदे विवक्षिते ग्रहणविषये' इति प्रहमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । 'तेने'त्यनेन तु 'तृतीयान्ते पदे विवक्षिते प्रहरणविषये' इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । 'सरूपे' इति प्रथमाद्विवचनान्तं पदविशेषणम् । इदमित्यर्थनिर्देशः । युद्धं प्रवृत्तमिति तद्विशेषणमध्याहार्यम् । कर्मव्यतिहारे द्योत्ये इत्यप्यध्याहार्यम् । ततश्च—सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्यते, कर्मव्यतिहारे द्योत्ये स बहुव्रीहिरिति सूत्रार्थः । उदाहरणन्तु—'केशेषु केशेषु' गृहीत्वेदं युद्धं प्रवृत्तं 'केशाकेशि' । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं 'दण्डादण्डि' । मुष्टया मुष्टया प्रहृत्येदं युद्धं प्रवृत्तमिति 'मुष्टीमुष्टि' इति ।

**केशाकेशि** ( ई० २३, ४३, ४८, ५१ )—केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति विग्रहे 'तत्र तेनेदमिति सरूपे' इति सूत्रेण समासे सुपो लुकि 'अन्येषामपि दृश्यते' इति पूर्वपदस्यान्तस्य दीर्घे 'इच् कर्मव्यतिहारे' इति समासान्ते इचि 'यस्येति च' इति अकारलोपे समासत्वात्प्रातिपदिकसंज्ञायां सौ अव्ययत्वात् सुब्लुकि 'केशाकेशि' इति सिद्धम् ।

**कमलाक्षी** ( ई० ४१ )—कमले इव अक्षिणी यस्याः इति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षचि 'नस्तद्धिते' इति टिलोपे स्त्रीत्वात् 'षिद्गौरादिभ्यश्च' इति ङीषि विभक्त्यादिकार्ये 'कमलाक्षी' इति सिद्धयति ।

**जलजाक्षी** ( ई० ४८ )—जलजे इव अक्षिणी यस्याः इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षचि 'नस्तद्धिते' इति टिलोपे षित्वात् 'षिद्गौरादिभ्यश्च' इति ङीषि विभक्त्यादिकार्ये 'जलजाक्षी' इति ।

**द्व्यङ्गुला यष्टिः** ( ई० ३९ )—'अङ्गुलेर्दारुणि' इति सूत्रस्य प्रत्युदाहरणमेतत् । तथाह्यत्र सूत्रे बहुव्रीहेरित्यनुवृत्त्यभावे द्वे अङ्गुली प्रमाणमस्याः इति विग्रहे 'तद्धितार्थे'ति तत्पुरुषसमासे कृते सुपो लुकि यणि 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः' इत्यचि स्त्रीत्वेन अदन्तत्वाट्टापि समासत्वात् सौ हल्ङ्यादिलोपे 'द्व्यङ्गुला' इत्यत्र अच्प्रत्ययं प्रबाध्य 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षचि षित्वात् ङीषि 'द्व्यङ्गुली' इत्यनिष्टापत्तेः ।

**द्विमूर्धः** ( ई० ४९, ५३ )—द्वौ मूर्धानौ यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्यये 'नस्तद्धिते' इति टिलोपे स्वादिकार्ये 'द्विमूर्धः' इति ।

**बहिर्लोमः** ( ई० ५२ )—बहिर्लोमानि यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'अन्तर्बहिर्भ्यां च लोम्नः' इति अप्प्रत्यये 'नस्तद्धिते' इति टिलोपे स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**द्रुणसः** ( ई० ५० )—द्रुरिव ( वृक्ष इवेत्यर्थः ) नासिका यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'अञ्नासिकायाः संज्ञायां नसं चास्थूलात्'

इत्यचि नासिकाशब्दस्य नसादेशे 'पूर्वपदात् संज्ञायामगः' इति णत्वे स्वादिकार्ये 'द्रुणसः' इति ।

**खरणसः** ( ई० ३८ )—खर इव नासिका यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'अञ्नासिकायाः नसं चास्थूलात्' इत्यचि नासिकाशब्दस्य नसादेशे च कृते 'पूर्वपदात् संज्ञायामगः' इति णत्वे विभक्तिकार्ये उक्तं रूपं जातम् ।

**विख्यः** ( ई० ३७ )—विगता नासिका यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि 'ख्यश्च' इति वार्तिकेन नासिकाशब्दस्य ख्यादेशे विभक्तिकार्ये 'विख्यः' इति । ननु विगता नासिका यस्येति विग्रहे बहुव्रीहिसमासे 'अञ्नासिकायाः—' इत्यचि नसादेशे स्त्रीत्वात् टापि विभक्तिकार्ये 'विनसा' इति भट्टिप्रयोगो न युज्यते, 'वेर्ग्रोवक्तव्यम्' इति ग्रादेशस्य 'ख्यश्च' इति ख्यादेशस्य च नसादेशं प्रत्यपवादत्वादिति चेन्न, 'विनसा हतबान्धवा' इति भट्टिप्रयोगे विगता नासिका विनासिका इति प्रादिसमासे कृते टायां 'पद्दन्—' इति नसादेशे कृते 'विनसे'ति व्याख्यानेनादोषात । एवञ्चात्र अबहुव्रीहित्वान्नोक्तादेशाविति दिक् ।

**चतुरश्रः** ( ई० ४१ )—चतस्रः अश्रयः ( कोणाः ) यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदजपदप्रोष्ठपदाः' इत्यनेन अचि 'यस्येति च' इति इकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**एणीपदः** ( ई० ४२ )—एणी इव पादावस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि 'सुप्रातसुश्व—' इति अचि निपातनसामर्थ्यात् 'पादः पत्' इति पदादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**प्रोष्ठपदः** ( ई० ५३ )—प्रोष्ठो गौः, तस्येव पादावस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'सुप्रातसुश्व—' इति अचि निपातनसामर्थ्यात् 'पादः पत्' इति पदादेशे स्वादिकार्ये 'प्रोष्ठपदः' इति ।

**अहलः** ( ई० ५२ )—अविद्यमानः हलिः यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्' इत्यचि 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'अहलः' इति । पक्षे 'अहलिः' इति भवति । इदन्तोऽपि हलिशब्दः हलपर्यायः इति ध्येयम् ।

**सुप्रजाः** ( ई० ३०, ५५ )—शोभना प्रजा यस्येति विग्रहे 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति वार्तिकेन समासे सुब्लुकि 'नित्यमसिच्प्रजामेधयोः' इति सूत्रेण असिचि 'यस्येति च' इत्याकारलोपे 'सुप्रजस्' इति तस्मात् समासत्वात् प्रातिपदिकसंज्ञायां सौ 'अत्वसन्तस्ये'ति दीर्घे 'हल्ङ्याप्–' इति सुलोपे सस्य रुत्वे विसर्गे 'सुप्रजाः' इति ।

**दुर्मेधाः** ( ई० ४३ )—दुर्गता मेधा यस्येति विग्रहे 'प्रादिभ्यो धातुजस्य–' इति समासे सुब्लुकि 'नित्यमसिच्प्रजामेधयोः' इत्यसिचि 'यस्येति च' इत्याकारलोपे समासत्वात् सौ 'अत्वसन्तस्ये'ति दीर्घे हल्ङ्यादिलोपे सस्य रुत्वे विसर्गे 'दुर्मेधाः' इति ।

**सन्दिग्धसाध्यधर्मा** ( ई० ४५ )—सन्दिग्धश्चासौ साध्यश्चेति कर्मधारयसमासे सुब्लुकि विभक्तिकार्ये 'सन्दिग्धसाध्यः' इति । ततश्च सन्दिग्धसाध्यो धर्मो यस्येति विग्रहे 'अनेकमन्यपदार्थे' इत्यनेन कर्मधारयगर्भबहुव्रीहिसमासे सुपो लुकि 'धर्मादनिच्केवलात्' इति अनिचि 'यस्येति च' इत्यकारलोपे समासत्वात् सौ 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे सुलोपे नलोपे उक्तं रूपं सिद्धम् । यत्तु सन्दिग्धः साध्यो धर्मो यस्येति विग्रहे समासे सति अनिचि 'सन्दिग्धसाध्यधर्मा' इत्युक्तं तन्न मनोरमम्, धर्मशब्दस्य केवलात् पूर्वपदात् परत्वाभावेन अनिच्प्रत्ययो न स्यात् ।

**हरितजम्भा** ( ई० ४१, ४२ )—हरितो जम्भो यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'जम्भासुहरिततृणसोमेभ्यः' इति सूत्रेण निपातनाद् अनिच्प्रत्यये 'यस्येति च' इत्यकारलोपे समासत्वात् सौ नान्तत्वाद् दीर्घे सुलोपे नलोपे उक्तं रूपं सिद्धम् ।

**द्विमुसलि** ( ई० ४६ )—द्वे मुसले यस्मिन् प्रहरणे इति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'द्विदण्ड्यादिभ्यश्च' इति इच्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं जातम् । कर्मव्यतिहाराभावात् पूर्वपदस्य न दीर्घः ।

**उभयाहस्ति** ( ई० ५२ )—उभयः हस्तौ यस्मिन् प्रहरणे इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'द्विदण्ड्यादिभ्यश्च' इतीचि 'यस्येति च' इत्यलोपे 'अन्येषामपि दृश्यते' इति निपातनात् पूर्वपदस्य दीर्घे विभक्तिकार्ये 'उभयाहस्ति' इति ।

**शतधन्वा** ( ई० ३६, ५३ )—शतधन्वा नाम राजविशेषः स्यमन्तकोपाख्याने प्रसिद्धः। शतानि धनूंषि यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'शतधनुस्' इति तस्मात् 'वा संज्ञायाम्' इत्यनङि उकारस्य यणि समासत्वात् सौ 'सर्वनामस्थाने–' इति दीर्घे हल्ङ्यादिलोपे नलोपे च 'शतधन्वा' इति। अनङभावे 'शतधनुः' इति।

**युवजानिः** ( ई० ५२ )—युवतिर्जाया यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'जायाया निङ्' इति यकारादाकारस्य निङि 'लोपो व्योर्वलि' यकारलोपे 'स्त्रियाः पुंवत्–' इति पुंवत्त्वात् तिप्रत्ययस्य निवृत्तौ विभक्त्यादिकार्ये 'युवजानिः' इति।

**उद्गन्धिः** ( ई० ४९ )—उद्गतो गन्धो यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहौ सुब्लुकि 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति गन्धस्येकारान्तादेशे विभक्तिकार्ये 'उद्गन्धिः' इति।

**कुड्मलाग्रदन्** ( ई० ३६, ५१ )—कुड्मलानां मुकुलानामग्राणि तानीव दन्ताः यस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च' इति सूत्रेण दन्तस्य दतृ आदेशे ऋकारस्येत्संज्ञायां लोपे च कृते उगित्वान्नुमि समासत्वात् सौ हल्ङ्यादिलोपे संयोगान्तलोपे 'कुड्मलाग्रदन्' इति। न लोपस्यासिद्धत्वादुपधादीर्घो न।

**महायशस्कः** ( ई० ५१ )—महत् यशः यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि 'आन्महतः–' इत्यात्वे 'शेषाद्विभाषा' इति कपि 'सोऽपदादौ' इति सत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम्। कपोऽभावे 'महायशाः' इति।

**बहुमालाकः** ( ई० ५२ )—बह्वयो माला यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'शेषाद्विभाषा' इति कपि 'आपोऽन्यतरस्याम्' इति ह्रस्वे 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे विभक्तिकार्ये 'बहुमालकः' इति। ह्रस्वाभावपक्षे 'बहुमालाकः' इति। कपो वैकल्पिकत्वात् पक्षे 'बहुमालः' इत्यपि भवति।

**विश्वदेवः** ( ई० ४० )—विश्वे देवा अस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि सति 'शेषाद्विभाषा' इति कपि प्राप्ते 'न सञ्ज्ञायाम्' इति निषेधे

विभक्तिकार्ये 'विश्वदेवः' इति। संज्ञायां समासस्य नित्यत्वात् मूलोक्तं लौकिकविग्रह-प्रदर्शनमत्र चिन्त्यमेवेति तत्त्वविदः।

**प्रशस्तभ्राता** ( ई० ५३ )—प्रशस्तो भ्राता यस्येति विग्रहे 'अनेकमन्य-पदार्थे' इति समासे सुपो लुकि सति 'नद्यृतश्च' इति कपि प्राप्ते 'वन्दिते भ्रातुः' इति निषेधे समासत्वात् सौ 'ऋदुशनस्–' इत्यनङादिकार्ये उक्तं रूपं सिद्धम्। ननु 'न पूजनात्' इत्यनेनैवात्र कपो निषेधे सिद्धे किमनेनेति चेन्न, 'न पूजनात्' इति निषेधस्तु 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतः प्रागेवेत्युक्तत्वात्।

**बहुतन्त्रीका** ( ई० ४४ )—बह्वयस्तन्त्र्यो यस्याः इति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'नद्यृतश्च' इति कपि स्त्रीत्वाट्टापि विभक्तिकार्ये 'बहुतन्त्रीका' इति। वीणेति शेषः। 'नाडीतन्त्र्योः स्वाङ्गे' इति सूत्रस्य प्रत्युदाहरणमेतत्। तथाहि अत्र 'स्वाङ्गे' इत्यनुक्तौ अत्रापि 'कपो निषेधापत्तेः।

**निष्प्रवाणिः** ( ई० ४९ )—निर्गता प्रवाण्यस्येति बहुव्रीहिसमासे सुब्लुकि 'निष्प्रवाणिश्च' इति कपोऽभावे विभक्तिकार्ये 'निष्प्रवाणिः' इति। पट इति शेषः। प्रवाणी तन्तुवायशलाका।

**द्व्यन्यः** ( ई० ४० )—द्वौ अन्यौ यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि सर्वनामसंख्ययोरन्यतरस्य पाक्षिके पूर्वनिपाते प्राप्ते 'मिथोऽनयोः समासे संख्यापूर्वं शब्दपरविप्रतिषेधात्' इति वार्तिकेन संख्यावाचकद्विशब्दस्यैव पूर्वनिपाते यणि विभक्तिकार्ये 'द्व्यन्यः' इति।

इति बहुव्रीहिः।

## अथ द्वन्द्वसमासः

**दम्पती** ( ई० ५२, ५४ )—जाया च पतिश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'राजदन्तादिषु परम्' इति सूत्रस्थ 'धर्मादिष्वनियमः' इति वार्तिकेन निपातनात् जायाशब्दस्य पूर्वप्रयोगे दम्भावे च कृते समासत्वात् प्रातिपदिक-संज्ञायां प्रथमाद्विवचने 'दम्पती' इति। जम्भावे कृते 'जम्पती' इति। उभयोरभावे 'जायापती' इत्यपि भवति।

**शिवकेशवौ** ( ई० ४९ )—शिवश्च केशवश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'अल्पाच्तरम्' इति सूत्रेण अल्पसंख्यावाचकस्य 'शिव' पदस्य पूर्वप्रयोगे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**द्वन्द्वश्चेति** ( ई० ३६ )—प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्वे एकवत् स्यादित्यर्थः। न च उद्भूतावयवभेदविवक्षायाम् इतरेतरयोगद्वन्द्वेन द्विवचनादेः, अनुद्भूतावयवभेदविवक्षायां समाहारद्वन्द्वेन एकवचनस्य च एकवद्भावे सिद्धे 'द्वन्द्वश्चे'त्याद्येकवद्भावविधायकप्रकरणं व्यर्थमिति वाच्यम् , 'प्राण्यङ्गादीनां समाहार एव यथा स्यात्' इति नियमबोधेन चारितार्थ्यात् ।

**पाणिपादम्** ( ई० ३४, ५०, ५३ )—पाण्योः पादयोश्च समाहारः इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे विभक्त्यादिकार्ये 'पाणिपादम्' इति । पाण्योः पादयोश्च प्राण्यवयवत्वात् प्राण्यङ्गोदाहरणमिदम् ।

**पदकक्रमकम्** ( ई० ५१ ) —पदकानां क्रमकानां च समाहारः इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'अध्ययनतोऽविप्रकृष्टाख्यानम्' इति सूत्रेण एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**कुरुकुरुक्षेत्रम्** ( ई० ३८ )—कुरवश्च कुरुक्षेत्रं चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'विशिष्टलिङ्गो नदीदेशोऽग्रामाः' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये उक्तं रूपं निष्पन्नम् ।

**यूकालिक्षम्** ( ई० ५३, ५४ )—यूकाश्च लिक्षाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'क्षुद्रजन्तवः' इति एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे विभक्त्यादिकार्ये 'यूकालिक्षम्' इति ।

**अहिनकुलम्** ( ई० ५१ )—अहयो नकुलाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'येषां च विरोधः शाश्वतिकः' इति एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**काकोलूकम्** ( ई० ४७ )—काकाश्च उलूकाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'येषां च विरोधः शाश्वतिकः' इति एकद्भावे 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये उक्तं रूपं सिद्धम् । ननु 'विभाषा वृक्षमृग–' इति सूत्रे पशु-

शकुनिद्वन्द्वयोरेकवद्भावो वक्ष्यते । तस्य तावत् 'गोमहिषं–गोमहिषाः' 'हंसचक्रवाकं–हंसचक्रवाकाः' इत्यत्र अवकाशः । 'येषां चे'त्यस्य 'अहिनकुलम्' इत्यत्रावकाशः । 'गोव्याघ्रम् , काकोलूकम्' इत्यादौ तु तदुभयं प्रसक्तं तत्र परत्वात् 'विभाषा वृक्षमृग–' इत्यनेन विभाषया एकवद्भावः कुतो नेति चेन्न, 'येषां चे'ति सूत्रस्थचकारेण बाधात् ।

**तक्षायस्कारम्** ( ई० ३९ )—तक्षाणश्च अयस्काराश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**प्लक्षन्यग्रोधम्** ( ई० ४९ )—प्लक्षाश्च न्यग्रोधाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति सूत्रेण विभाषया एकवद्भावे 'स नपुंसकम्' इति नपुंकत्वे स्वादिकार्ये उक्तं रूपं सिद्धम् । पक्षे 'प्लक्षन्यग्रोधाः' इति । 'विभाषे'ति सूत्रे 'वृक्षादौ विशेषाणामेव ग्रहणम्' इति वार्तिकोक्तत्वात् 'वृक्षाश्च धवाश्चे'त्यादौ नायं विधिरिति किन्तु 'जातिरप्राणिनाम्' इति नित्यैकवत्त्वमित्यवसेयम् ।

**रुरुपृषतम्** ( ई० ४४, ४८, ५० )—मृगद्वन्द्वोदाहरणमेतत् । रुरवश्च पृषताश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति विभषयैकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये 'रुरुपृषतम्' इति । पक्षे 'रुरुपृषताः' इत्यपि भवति । अत्र सूत्रे 'वृक्षादौ विशेषाणामेव ग्रहणम्' इति वार्तिककृतोक्तं न विस्मर्तव्यम् ।

**कुशकाशम्** ( ई० ४२ )—तृणद्वन्द्वोदाहरणमेतत् । कुशाश्च काशाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति सूत्रेण विभाषयैकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे विभक्तिकार्ये 'कुशकाशम्' इति । पक्षे 'कुशकाशाः' इति भवति ।

अत्र सूत्रे 'वृक्षादौ विशेषाणामेव ग्रहणम्' इति वार्तिकं विहितम् । तस्य वृक्षविशेषवाचिनां तृणविशेषवाचिनां धान्यविशेषवाचिनां पशुविशेषवाचिनाञ्चेत्यर्थः इति स्वं रूपमिति सूत्रे भाष्ये उक्तम् ।

**शुकबकम्** ( ई० ३५ )—शकुनिद्वन्द्वोदाहरणमेतत् । शुकाश्च बकाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववड-

वपूर्वापराधरोत्तराणाम्' इति सूत्रेण एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये 'शुकबकम्' इति। पक्षे 'शुकबकाः' इति च भवति।

**अश्ववडवम्** ( ई० ४१ )—अश्वाश्च वडवाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इत्यनेन एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे विभक्तिकार्ये 'अश्ववडवम्' इति। पक्षे 'अश्ववडवौ' इति भवति। अत्र सूत्रे 'वृक्षादौ विशेषाणामेव ग्रहणम्' इति वार्तिककृतोक्तम्।

**अधरोत्तरम्** ( ई० ३० )—अस्यापि साधुत्वं पूर्वज्ज्ञेयम्।

**बदरामलकम्** ( ई० ४३, ४६ )—बदर्याः फलं बदरम्, आमलक्याः फलम् आमलकम्। उभयत्र विकारावयवतद्धितस्य 'फले लुक्' इति लुक्। 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य च लुक्। ततश्च बदराणि च आमलकानि चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुपो लुकि सवर्णदीर्घे 'जातिरप्राणिनाम्' इति नित्यैकवद्भावे' 'स नपुंसकम्' इति नपुंसकत्वे विभक्तिकार्ये 'बदरामलकम्' इति। 'जातिरप्राणिनामि'त्येकवद्भावो बहुवचनान्तावयवकद्वन्द्वसत्वे एवेति एकवद्भावप्रकरणशेषे 'फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्' इति वार्तिकोक्तत्वात्। तथा च-बदरं च आमलकं चेति विग्रहे तु बहुवचनान्तावयवकद्वन्द्वत्वाऽभावात् 'बदरामलके' इत्येव भवतीति बोध्यम्। जातिप्राधान्य एवाऽयमेकवद्भावः इति 'जातिरप्राणिनाम्' इति सूत्रस्थभाष्यमपि न विस्मर्तव्यम्।

**शीतोष्णे उदके रतः** ( ई० ३३, ५१ )—अत्र 'उदके' इति विशेष्यनिदर्शनात् तद्विशेषणयोः शीतोष्णशब्दयोर्द्रव्यवाचित्वमिति। तथा च शीतश्च उष्णं चेति विग्रहे 'चार्थे द्वन्द्वः' इति इतरेतरयोगद्वन्द्वसमासे सुब्लुकि शीतोष्णशब्दयोः द्रव्यवाचित्वात् 'विप्रतिषिद्धं चानधिकरणवाचि' इत्यनेन एकवद्भावो न। ननु 'शीतोष्णं शीतोष्णे' 'सुखदुःखं-सुखदुःखे' इत्यादौ 'चार्थे द्वन्द्वः' इत्यनेन इतरेतरयोगसमाहाराभ्यामेव एकवत्त्वविकल्पसिद्धेः 'विप्रतिषिद्धम्–' इति सूत्रेण विभाषया एकवद्भावविधानं व्यर्थमिति चेन्न, 'विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेव' इति नियमार्थत्वेनावश्यकत्वात्। तेन 'शीतोष्णे उदके रतः' इत्यत्र विरुद्धार्थकत्वेऽपि द्रव्यवाचित्वात् न समाहारद्वन्द्व इति।

**विप्रतिषिद्धं किमिति**—'विप्रतिषिद्धं चानधिकरणवाचि' इति सूत्रे विप्रतिषिद्धग्रहणं किमर्थमिति प्रश्नः। अयम्भावः–नन्दकश्च पाञ्चजन्यश्चेति विग्रहे इतरेतरयोगे सति 'नन्दकपाञ्चजन्यौ' इति। समाहारे सति 'स नपुंसकम्' इति नपुंसकत्वे 'नन्दकपाञ्चजन्यम्' इति च रूपद्वयस्य सिद्धिर्भवति। विप्रतिषिद्धग्रहणस्य फलं यदि विरुद्धार्थाः शब्दाः स्युस्तदा गुणवाचकानां शब्दानामेव पाक्षिकसमाहारद्वन्द्वो भवति। द्रव्यवाचिकानान्तु इतरेतरयोग एव भवति। 'शीतोष्णे उदके स्तः' अत्र उदकशब्दस्य द्रव्यवाचकत्वेनेतरेतरयोग एव भवति। अथ च यदि विरुद्धार्थाः शब्दाः न स्युः तदा द्रव्यवाचकानामपि शब्दानां पाक्षिकसमाहारद्वन्द्वो भवति। एवञ्च नन्दकपाञ्चजन्ययोर्विरोधाभावेनेतरेतरयोगः समाहारश्चेत्युभयमपि भवतीति दिक्।

**वाङ्मनसे** ( ई० ३१ )—वाक् च मनश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'न दधिपय आदीनि' इति सूत्रेण एकवद्भावनिषेधे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। 'न दधिपय आदीनि' इत्यस्य एषां समाहारद्वन्द्वो नेति फलितार्थः।

**दश दन्तोष्ठाः** ( ई० ४५ )—दन्ताश्च ओष्ठाश्चेति विग्रहे सुब्लुकि 'अधिकरणैतावत्त्वे च' इति सूत्रेण एकवद्भावस्यानियमेन अत्रैकवद्भावाऽभावे विभक्तिकार्ये उक्तं रूपं सिद्धम्। समाहारद्वन्द्वस्तु नात्र शङ्क्यः, समासार्थसमाहारविशेषणीभूतसमस्यमानपदार्थानां पदान्तरलभ्यदशत्वसापेक्षत्वेन असामर्थ्यात्।

**उपदशं, दन्तोष्ठम्** ( ई० ३६ )—उपदशमित्यत्र दशानां समीपे इत्यव्ययीभावः। 'दन्तोष्ठम्' इत्यत्र तु समासार्थसमाहारविशेषणीभूतसमस्यमानपदार्थानां पदान्तरलभ्य-उपदशत्वसापेक्षत्वेन असामर्थ्येऽपि 'विभाषा समीपे' इति सूत्रारम्भसामर्थ्यात् समाहारद्वन्द्वः। ततश्च दन्ताश्च ओष्ठाश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समाहारद्वन्द्वे सुब्लुकि 'स नपुंसकम्' इति नपुंसकत्वे स्वादिकार्ये उक्तं रूपं सिद्धम्। पक्षे इतरेतरयोगद्वन्द्वे सति 'उपदशाः दन्तोष्ठाः' इत्यपि भवति।

**मित्रावरुणौ** ( ई० ४०, ५१, ५५ )—मित्रश्च वरुणश्चेति विग्रहे 'चार्थे द्वन्द्वः' इत्यनेन इतरेतरयोगद्वन्द्वे सुपो लुकि ऋदन्तत्वाभावात् 'आनङ् ऋतो द्वन्द्वे' इत्यस्याप्राप्त्या 'देवताद्वन्द्वे च' इति सूत्रेण उत्तरपदे परे आनङादेशे पदत्वान्नलोपे विभक्त्यादिकार्ये 'मित्रावरुणौ' इति प्रथमाद्विवचने रूपं सिद्धम्।

**पुनर्द्वन्द्वग्रहणम्** ( ई० ४२ )—अयम्भावः—'देवताद्वन्द्वे च' इति सूत्रे 'आनङ्ऋतो द्वन्द्वे' इति पूर्वसूत्राद् द्वन्द्वग्रहणेऽनुवर्तमानेऽपीष्टसिद्धे पुनः द्वन्द्वग्रहणं

किमर्थमिति चेन्न, 'निर्वापादौ प्रसिद्धसाहित्यकदेवतावाचकशब्दस्यैव उत्तरपदे परे द्वन्द्वे आनङ् स्यात्' इति ज्ञापनार्थत्वेन तस्याचश्यकत्वात्। तेन 'ब्रह्मप्रजापती' इत्यादौ 'देवताद्वन्द्वे चे'ति नाऽनङ्। एतद्धि साहचर्यं नैकहविर्भागित्वेन श्रुतम्, नापि लोके च प्रसिद्धमिति दिक्।

**अग्नीषोमौ** ( ई० ४० ५४ )—अग्निश्च सोमश्चेति विग्रहे इतरेतरयोगद्वन्द्वे सुपो लुकि 'ईदग्नेः सोमवरुणयोः' इति ईत्वे 'अग्ने स्तुतस्तोमसोमाः' इति षत्वे विभक्त्यादिकार्ये प्रथमाद्विवचने 'अग्नीषोमौ' इति।

**आग्निमारुतं कर्म** ( ई० ५२ )—अग्निश्च मरुतश्चेति विग्रहे इतरेतरयोगद्वन्द्वे सुपो लुकि 'देवताद्वन्द्वे च' इत्यानङि नलोपे 'अग्नामरुतौ' इति। ततः अग्नामरुतौ देवते अस्येति विग्रहे 'साऽस्य देवता' इत्यणि तद्धितान्तत्वात् सुपो लुकि 'देवताद्वन्द्वे च' इत्युभयपदवृद्धौ अलौकिके विग्रहवाक्ये एव 'देवताद्वन्द्वे च' इत्यानङं बाधित्वा 'इद्वृद्धौ' इत्यनेन अग्नेरिकारस्य इत्वे विभक्तिकार्ये 'आग्निमारुतम्' इति। अत्रानङो बाधनार्थमेव इत्वमिति तत्त्वम्।

**आग्निवारुणम्** ( ई० ४७ )—अग्निश्च वरुणश्चेति विग्रहे इतरेतरयोगद्वन्द्वे सुब्लुकि 'ईदग्नेः सोमवरुणयोः' इति ईत्वे विभक्तिकार्ये 'अग्निवरुणौ' इति। ततः अग्नीवरुणौ देवतेऽस्येति विग्रहे 'साऽस्य देवता' इत्यणि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुपो लुकि 'देवताद्वन्द्वे च' इत्युभयपदवृद्धौ अलौकिके विग्रहवाक्ये एव 'ईदग्नेः सोमवरुणयोः' इतीत्त्वं बाधित्वा 'इद्वृद्धौ' इत्यनेन अग्नेरिकास्य इकारे विभक्त्यादिकार्ये 'आग्निवारुणम्' इति। अत्र ईत्त्वबाधनार्थमेव इकारस्येकारविधानमित्यवसेयम्।

**उषासासूर्यम्** ( ई० ४२ )—उषाश्च सूर्यश्चेति विग्रहे 'चार्थे द्वन्द्वः' इत्यनेन समाहारद्वन्द्वे सुपो लुकि 'स नपुंसकम्' इति नपुंसकत्वे 'उषासोषसः' इत्यनेन उषश्शब्दस्य उषासादेशे स्वादिकार्ये उक्तं रूपं सिद्धम्।

**वाक्त्वचम्** ( ई० ४०, ५१ )—वाक् च त्वक् चेति विग्रहे 'चार्थे द्वन्द्वः' इति समाहारद्वन्द्वे सुपो लुकि 'स नपुंसकम्' इति नपुंसकत्वे कुत्वस्याऽसिद्धत्वात् 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टचि स्वादिकार्ये 'वाक्त्वचम्' इति सिद्धम्।

इति द्वन्द्वसमासः।

## अथ एकशेषः

**गर्गाः** ( ई० ५१ )—'स्त्री पुंवच्चे'ति सूत्रस्य 'गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यते, तस्य शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुमानिव स्यादिति भावार्थः । ततश्च गार्गी च गार्ग्यायणौ च इति विग्रहे 'गर्गाः' इति भवति । अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते । स पुंवत् । ननु तर्हि यञ् कुतो न श्रूयत इति चेन्न, 'स्त्रियामि'त्यनुवर्तमाने 'यञञोश्च' इत्यनेन तस्य लुग्विधानात् ।

**हंसौ** ( ई० ३४, ४९, ५१ )—हंसी च हंसश्चेति विग्रहे 'पुमान् स्त्रिया' इति सूत्रेण पुंस्त्वस्त्रीत्वमात्रकृतवैरूप्यात् पुंल्लिङ्गस्य हंसशब्दस्य शेषे प्रथमाद्विवचने 'हंसौ' इति ।

**भ्रातरौ** ( ई० ५३ )—भ्राता च स्वसा चेति विग्रहे 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्यनेन भ्रातृशब्दस्य शेषे स्वसृशब्दस्य लोपे च कृते 'भ्रातरौ' इति भवति ।

एकशेषविषयेषु सर्वत्र प्रसक्तं द्वन्द्वमनवकाशत्वादेकशेषो बाधते । कृते त्वेकशेषे अनेकाऽभावात् द्वन्द्वो न प्रवर्तत इति न विस्मर्तव्यम् । 'द्वन्द्वसमासे एकशेषः' इति सरूपसूत्रस्थभाष्यं तु द्वन्द्वे प्रसक्ते सहविवक्षायामेकशेष इति व्याख्येयम् ।

**पुत्रौ** ( ई० ४१, ५४ )—पुत्रश्च दुहिता चेति विग्रहे 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति सूत्रेण पुत्रशब्दस्य शेषे 'पुत्रौ' इति ।

**शुक्लम्** ( ई० ४६ )—शुक्लशब्दस्त्रिलिङ्गः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यमरोक्तेः । ततश्च शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम् इति भवति । अत्र शुक्लश्च शुक्ला च शुक्लं चेति विग्रहे 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रेण क्लीबान्तस्यैकशेषे एकवत्वे च कृते 'शुक्लम्' इति सिद्ध्यति ।

**पितरौ** ( ई० ३९, ५४ )—माता च पिता चेति विग्रहे 'पिता मात्रा' इति सूत्रेण पितृशब्दस्य विभाषया शेषे सति द्विवचने 'पितरौ' इति । पक्षे 'मातापितरौ' इत्यपि भवति ।

**तौ** ( ई० ३७, ४७, ५५ )—स च देवदत्तश्चेति विग्रहे 'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रेण त्यदादेः तत्-शब्दस्य शेषे सति द्विवचने 'तौ' इति । 'त्यदादीनां

मिथः सहोक्तौ यत्परं तच्छिष्यते' इति वार्तिके 'पूर्वशेषोऽपि दृश्यते' इति भाष्योक्तत्वात् 'स च यश्चेति विग्रहेऽपि 'तौ' इति ज्ञेयम् ।

**अद्वन्द्वतत्पुरुष इति** ( ई० ३८, ४१ )—त्यदादीनां स्त्रीशेषेऽपि सहविवक्षितेषु यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादिकानि भवन्ति, कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव, इत्यर्थक–'त्यादादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इति वार्तिकस्याऽपवादोऽयम् 'अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्' इति । द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां स्त्रीशेषे त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी'त्येतन्न भवतीत्यर्थः । तेन द्वन्द्वे–अयं च इयं च इमे इति 'कुक्कुटमयूर्याविमे' इत्यत्र 'त्यदादितः शेषे' इति पुंल्लिङ्गत्वं न भवति, किन्तु विशेष्यनिघ्नतैव ।

**गावः इमाः** ( ई० ४३ )—गौश्च गौश्च गौश्चेति विग्रहे पुंल्लिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु 'पुमान् स्त्रियाः' इत्येतद्बाधित्वा 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इति सूत्रेण स्त्रीलिङ्गगोशब्दस्य शेषे 'गावः इमाः' इति भवति ।

**रुरव इमे** ( ई० ३५ )—रुरवश्च रुरवश्चेति विग्रहे पुंल्लिङ्गस्त्रीलिङ्गयोः सहविवक्षितयोः 'पुमान् स्त्रियाः' इत्यनेन पुंल्लिङ्गस्य शेषे 'रुरव इमे' इति भवति । रुरुः कृष्णाख्यो मृगः । तेन अग्राम्यपशुत्वात् 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इत्यस्य नात्र प्रवृत्तिः । प्रवृत्ते तु 'रुरव इमाः' इति स्यात् ।

**वत्सा इमे** ( ई० ४०, ५५ )—वत्साश्च वत्साश्चेति विग्रहे पुंल्लिङ्गस्त्रीलिङ्गयोः सहविवक्षितयोः 'पुमान् स्त्रियाः' इत्यनेन पुंसः शेषे उक्तं रूपं सिद्धम् । 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इति सूत्रे 'अतरुणेषु' इत्युक्तत्वाद् अत्र तेन नैकशेषः । तथा सति तु 'वत्सा इमाः' इत्यनिष्टापत्तेः ।

**अश्वा इमे** ( ई० ४५ )—अश्वाश्च अश्वाश्चेति विग्रहे 'पुमान् स्त्रियाः' इति पुंवाचकस्य अश्वशब्दस्य शेषे 'अश्वा इमे' इति भवति । 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इत्यस्यात्र प्रवृत्तिस्तु न, तत्र सूत्रे 'अनेकशफेष्विति वाच्यम्' इति वार्तिकोक्तत्वात् ।

इत्येकशेषः ।

## अथ सर्वसमासशेषप्रकरणम्

**सुपां सुपेति** ( ई० ३९, ५३ )—सुबन्तानां सुबन्तेन, तिङन्तेन, प्रातिपदिकेन, धातुना च समासः। तिङन्तानां तिङन्तेन सुबन्तेन च समासः। इत्येवं बुधैः षड्विधः समासो ज्ञेयः, इति कारिकार्थः। क्रमेण उदाहरणानि यथा—'राजपुरुषः' अत्र 'राज्ञः' इति षष्ठन्तस्य सुबन्तस्य 'पुरुषः' इति प्रथमान्तेन सुबन्तेन सह समासः। 'पर्यभूषयत्' अत्र 'सह सुपा' इत्यत्र 'सह' इति योगविभागात् 'परि' इति सुबन्तस्य 'अभूषयत्' इति तिङन्तेन समासः। 'कुम्भकारः' इत्यत्र 'गतिकारके'ति परिभाषया 'कार' शब्दात् सुबुत्पत्तेः पूर्वमेव 'उपपदमतिङ्' इति सूत्रेण 'कुम्भस्ये'ति षष्ठन्तस्य 'कार' इति प्रातिपदिकेन समासः। 'कटप्रूः' इत्यत्र 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजिश्रीणाम्' इति वार्तिकेन 'कटम्' इति द्वितीयान्तस्य 'प्रु' धातुना समासो निपातितः। 'पिबत खादत' इत्यत्र 'मयूरव्यंसकादीनां च' इत्यनेन 'पिबत' इति तिङन्तस्य 'खादत' इति तिङन्तेन समासः। 'कृन्तविचक्षणाः' इत्यत्र 'कृन्त' इति तिङन्तस्य 'विचक्षणे'ति सुबन्तेन सह 'एहीडादयोऽन्यपदार्थे इति गणसूत्रस्य मयूरव्यंसकादिगणे पाठात् समासः।

इति सर्वसमासशेषः।

## अथ समासान्तः

**अर्धर्चः** ( ई० ४९ )—ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे सुब्लुकि 'प्रथमानिर्दिष्टं समासमुपसर्जनम्' इत्यर्धशब्दस्योपसर्जनत्वात् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे गुणे रपरत्वे 'ऋक्पूरब्धूः पथामानक्षे' इत्यप्रत्यये 'अर्धर्चाः पुंसि च' इति पुंस्त्वे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**विष्णुपुरम्** ( ई० ३४ )—विष्णोः पुरमिति विग्रहे षष्ठीसमासे सुब्लुकि 'ऋक्पूरब्धूः पथामानक्षे' इत्यप्रत्यये 'परवल्लिङ्गम्—' इति बाधित्वा लोकात् क्लीबत्वे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्।

**विमलापं सरः** ( ई० ५१ )—विमलाः आपः यस्मिन्निति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'ऋक्पूरब्धूः पथामानक्षे' इत्यप्रत्यये स्वादिकार्ये उक्तं रूपं निष्पन्नम्।

**द्वीपम्** ( ई० ५० )—द्वयोर्गता आपो यस्मिन्निति व्यधिकरणबहुव्रीहौ 'ऋक्पूरब्धूः पथामानक्षे' इत्यप्रत्यये 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यनेन 'आदेः परस्ये'ति परिभाषया आदेरकारस्य ईत्वे सवर्णदीर्घे स्वादिकार्ये 'द्विपम्' इति ।

**अन्तरीपम्** ( ई० ५२ )—अन्तर्गता आपः यस्मिन्निति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'ऋक्पूरब्धूः–' इति अप्रत्यये 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति अपोऽकारस्य ईत्वे विक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**प्रेपम्** ( ई० ५३ )—प्रगता आपो यस्येति बहुव्रीहौ 'ऋक्पूरब्धूः–' इत्यप्रत्यये 'अवर्णान्ताद्वा' इति वार्तिकेन विभाषया अपोऽकारस्य ईत्वे गुणे विभक्त्यादिकार्ये 'प्रेपम्' इति । पक्षे 'प्रापम्' इति भवति ।

**अनूपो देशः** ( ई० ४६, ५१, ५४ )—अनुकूला आपो यस्मिन् देशे इति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'ऋक्पूरब्धूः–' इत्यप्रत्यये 'ऊदनोर्देशे' इति सूत्रेण ऊत्वे सवर्णदीर्घे स्वादिकार्ये 'अनूपः' इति ।

**सखिपथः** ( ई० ५५ )—सख्युः पन्था इति विग्रहे षष्ठीतत्पुरुषसमासे सुपो लुकि 'ऋक्पूरब्धूः–' इत्यप्रत्यये 'नस्तद्धिते' इति टिलोपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**अनुसामम्** ( ई० ५३ )—अनुगतं साम इति विग्रहे तत्पुरुषसमासे सति 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इति सूत्रेण अचि 'नस्तद्धिते' इति टिलोपे स्वादिकार्ये 'अनुसामम्' इति ।

**अवलोमम्** ( ई० ४१ )—अवगतं लोम इति विग्रहे समासे सुब्लुकि 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यचि 'नस्तद्धिते' इति टिलोपे स्वादिकार्ये अवलोमम्' इति ।

**द्विभूमः** ( ई० ४९ )—द्वे भूमी यस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि 'कृष्णोदक्पाण्डुसङ्ख्यापूर्वायाः भूमेरजिष्यते' इति वार्तिकेन अचि 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'द्विभूमः' इति ।

**गवाक्षः** ( ई० ५४ )—गवामक्षि इवेति विग्रहे समासे सुब्लुकि 'अक्ष्णोऽदर्शनात्' इति सूत्रेण अचि 'नस्तद्धिते' इति टिलोपे अवादेशे विभक्त्यादिकार्ये 'गवाक्षः' इति ।

**सुचतुरः** ( ई० ३८ )—सु = शोभनानि चत्वारि यस्येति विग्रहे समासे सुपो लुकि 'अचतुर–' ( सम्पूर्णं सूत्रं लेखनीयम् ), इति सूत्रेण निपातनादचि विभक्त्यादिकार्ये 'सुचतुरः' इति । अत्र निपातनसामर्थ्यात् 'न पूजनात्' इति समासान्तप्रत्ययस्य निषेधो न ।

**त्रिचतुराः** ( ई० ४४ )—त्रयो वा चत्वारो वेति विग्रहे 'सङ्ख्ययाव्यया–' इति समासे सुपो लुकि 'बहुव्रीहौ सङ्ख्येये डज् बहुगणात्' इति डचं बाधित्वा 'अचतुर–' इत्यादिसूत्रेण निपातनादचि विभक्तिकार्ये 'त्रिचतुराः' इति ।

**उपचतुराः** ( ई० ५२ )—चतुर्णां समीपे उपचतुराः । अत्र समासे सति 'अचतुर–' इत्यादिसूत्रेण निपातनाद् अजिति विशेषः ।

**स्त्रीपुंसौ** ( ई० ३४ ) स्त्री च पुमांश्चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'अचतुर–' इत्यादि सूत्रेण निपातनादचि विभक्त्यादिकार्ये 'स्त्रीपुंसौ' इति । अजभावे 'स्त्रीपुमांसौ' इति स्यात् ।

**वाङ्मनसे** ( ई० ५५ ) वाक् च मनश्चेति द्वन्द्वसमासे सुब्लुकि 'अचतुर–' इत्यादिसूत्रेण अचि विभक्त्यादिकार्ये 'वाङ्मनसे' इति । अजभावे 'वाङ्मनसी' इति स्यात् ।

**नक्तन्दिवम्** (ई० ५१)—नक्तमिति मान्तमव्ययम् । दिवा चेत्यकारान्तमव्ययम् । नक्तं च दिवा चेति विग्रहे समासे कृते 'अचतुर–' इति सूत्रेण द्वन्द्वादचि 'यस्येति च' इत्याकारलोपे 'अव्ययीभावश्च' इत्यव्ययत्वे 'स नपुंसकम्' इति नपुंसकत्वे विभक्त्यादिकार्ये 'नक्तन्दिवम्' इति ।

**त्र्यायुषम्** ( ई० ४५ )—त्रयाणामायुषां समाहारः इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे द्विगुः । तस्मात् 'अचतुर–' इत्यचि यणादेशे विभक्त्यादिकार्ये 'त्र्यायुषम्' इति ।

**ऋग्यजुषम्** ( ई० ४१ )—'ऋचश्च यजूंषि च' इति समाहारे द्वन्द्वे सति 'अचतुर–' इति सूत्रेण अचि विभक्त्यादिकार्ये 'ऋग्यजुषम्' इति ।

**हस्तिवर्चसम्** ( ई० ३५, ४९ )—हस्तिनो वर्चः इति विग्रहे षष्ठी समासे सति 'ब्रह्महस्तिभ्यां वर्चसः' इति सूत्रेण अचि विभक्त्यादि कार्ये उक्तं रूपं सिद्धम् ।

**राजवर्चसम्** ( ई० ४३ )—राज्ञां वर्चः इति विग्रहे षष्ठीसमासे सुपो लुकि

'पल्यराजभ्यां चेति वक्तव्यम्' इति वार्तिकेन अचि विभक्त्यादिकार्ये 'राजवर्चसम्' इति।

**सन्तमसम्** ( ई० ३८ )—सन्ततं तमः इति विग्रहे प्रादिसमासे सुपो लुकि 'अवसमन्धेभ्यस्तमसः' इति सूत्रेण अचि विभक्त्यादिकार्ये 'सन्तमसम्' इति ।

**अन्धतमसम्** ( ई० ४०, ५२ )—अन्धं तमः इति विग्रहे कर्मधारयसमासे सति 'अवसमन्धेभ्यस्तमसः' इति सूत्रेण अचि विभक्त्यादिकार्ये 'अन्धतमसम्' इति।

**प्राध्वः** ( ई० ३९, ४० )—प्रगतः अध्वानमिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकेन समासे सुपो लुकि 'उपसर्गादध्वनः' इति सूत्रेण अचि 'नस्तद्धिते' इति टिलोपे सवर्णदीर्घे विभक्तिकार्ये 'प्राध्वः' इति । 'रथः' इति शेषः ।

**अराजा** ( ई० ५३ )—न राजेति विग्रहे नञ्तत्पुरुषसमासे सति 'नञस्तत्पुरुषात्' इति सूत्रेण निषेधात् 'राजाहस्सखिभ्यष्टच्' इति प्राप्तष्टचो निषेधे समासत्वात् सौ दीर्घे सुलोपे नलोपे 'अराजा' इति ।

**असखा** ( ई० ५२ ) न सखेति विग्रहे नञ्तत्पुरुषसमासे कृते 'राजाहस्सखिभ्यष्टच्' इति टचि प्राप्ते 'नञस्तत्पुरुषात्' इति निषेधे स्वादिकार्ये 'असखा' इति।

**अपथम्** ( ई० ५२ ) न पन्था इति विग्रहे नञ्तत्पुरुषसमासे सति 'ऋक्पूरब्धूः–' इति नित्ये अप्रत्यये प्राप्ते तं प्रबाध्य 'पथो विभाषा' इति विभाषया अप्रत्यये कृते 'नस्तद्धिते' इति टिलोपे 'पथः सङ्ख्याव्ययादेः' इति नपुंसकत्वे विभक्त्यादिकार्ये 'अपथम्' इति ।

इति समासान्तः



## अथ अलुक्समासः

**पाटलिपुत्रादागतः** ( ई० ४१ )—अत्र 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासे सति 'पञ्चम्याः स्तोकादिभ्यः' इति पञ्चम्याः अलुक् ।

**अञ्जसाकृतम्** ( ई० ३९, ५० )—अञ्जशब्दः आर्जवे वर्तते। ततश्च आर्जवेन कृतमित्यर्थः । अत्र 'कर्तृकरणे कृता बहुलम्' इति समासे सति 'अञ्जस उपसंख्यानम्' इति वार्तिकेन तृतीयायाः अलुक् ।

**मनसागुप्ता** ( ई० ३८ )—अत्र 'कर्तृकरणे–' इति समासे सति 'मनसः संज्ञायाम्' इति सूत्रेण तृतीयायाः अलुक् ।

**आत्मनापञ्चमः** ( ई० ५१ )—आत्मकृतपञ्चमत्ववानित्यर्थः। अत्र 'तृतीया तत्कृतार्थगुणवचनेन' इति समासे सति 'आत्मनश्च' इति सूत्रेण तृतीयायाः अलुक्। अत्र सूत्रे 'पूरण इति वक्तव्यम्' इति वार्तिककृतोक्तम्। पूरणप्रत्ययान्ते उत्तरपदे परे आत्मनः स्तृतीयायाः अलुक् स्यादित्यर्थः। तेन 'आत्मना कृतमि'ति विग्रहे 'आत्मकृतम्' इति सिद्धं रूपं निष्पन्नम्।

**आत्मनेपदम्** ( ई० ५२ )—धर्माय नियमो धर्मनियमः' इति भाष्यात् 'चतुर्थी'ति योगविभागादत्र समासः। समासे कृते 'वैयाकरणाख्यायां चतुर्थ्याः' इति सूत्रेण चतुर्थ्याः अलुकि विभक्त्यादि कार्ये उक्तं रूपं सिद्धम्।

**कारनाम्नि च प्राचां हलादौ** (ई० ३६, ५२ )—अयम्भावः–मुकुटे 'कार्षापणम्' इत्यादीनां 'हलन्तात् सप्तम्याः संज्ञायाम्' इति सूत्रेणैव सिद्धत्वात् 'कारनाम्नि–' इति सूत्रं किमर्थमिति चेन्न–'प्राचां देशे हलादौ यदि भवति तर्हि कारनाम्न्य एव, कारनाम्नि हलादौ चेत् प्राचामेव, प्राचां कारनाम्नि चेद् हलादावेव, इति त्रिविधनियमार्थत्वेन आवश्यकत्वात्। अत्र नाम ग्रहणं स्पष्टार्थं 'संज्ञायाम्' इत्यनुवृत्त्यैव सिद्धेः।

प्रत्युदाहरणं त्वित्थम्—कारनाम्नि किम्? अभ्याहितपशुः ( वणिक्-पशुपाल-कर्षकेभ्यो राजग्राह्यो भागः करः, स एव कारः, तद्विशेषवाचकः–'कारनाम'इति) कारादन्यस्यैतद् देयस्य नाम। प्राचां किम्? यूथपशुः। यूथपश्वादयः उदग्देशे काराः। हलादौ किम्? अविकटोरणः। हलन्तात् किम्? नद्यां दोहो नदीदोहः।

**मुकुटेकार्षापणम्** ( ई० ५२ )—अत्र सप्तमीसमासे सति 'कारनाम्नि च प्राचां हलादौ' इति सप्तम्याः अलुक्।

**दृषदिमाषकः** ( ई० ३३, ५२ ) अत्र सप्तमीतत्पुरुषसमासे सति 'कारनाम्नि च प्राचां हलादौ' इति सप्तम्याः अलुक्।

**अविकटोरणः** ( ई० ४३ )—'कारनाम्नि च प्राचां हलादौ' इति सूत्रस्थ 'हलादावित्यस्य प्रत्युदाहरणमेतत्। अविशब्दात् सङ्घाते कटच्। उरणो मेषः।

**उरसिलोमा** ( ई० ५५ )—कस्यचिन्नाम एतत्। 'संज्ञायाम्' इत्यनेनात्र सप्तमीतत्पुरुषे कृते 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सूत्रेण सप्तम्याः अलुक्।

**गुप्तिबन्धः** ( ई० ३५ )—'संज्ञायाम्' इत्यनेनात्र सप्तमीतत्पुरुषः। 'बन्धे विभाषा' इति सूत्रे हलन्तादित्यननुवर्तमाने अत्रापि सप्तम्याः अलुक् स्यादिति।

**स्तम्बे रमः** ( ई० ४४, ४८ )—तृणसमूहः स्तम्बः, तस्मिन् रमते इति स्तम्बेरमः हस्ती। अत्र 'सञ्ज्ञायाम्' इति तत्पुरुषसमासे सति 'तत्पुरुषे कृति बहुलम्' इति सूत्रेण सप्तम्याः अलुक्। बहुलमित्युक्तत्वात् क्वचिन्नायं निषेधः–कुरुषु चरतीति 'कुरुचरः'।

**कर्णेजपः** ( ई० ५४ )—कर्णे जपति = परदोषमुपांश्वाविष्करोतीति कर्णेजपः पिशुनः। 'स्तम्बकर्णयोरमिजपोः' इत्यच्। उपपदसमासः। अत्र 'तत्पुरुषे कृति बहुलम्' इति सप्तम्याः अलुक्।

**शरदिजः** ( ई० ४९ )—शरदि जातः शरदिजः। 'संज्ञायाम्' इत्यनेनात्र समासः। 'प्रावृट्छरत्कालदिवां जे' इति सप्तम्याः अलुक्।

**अप्सुयोनिः** ( ई० ३४ )—अप्सु योनिरुत्पत्तिर्यस्य सः अप्सुयोनिः। अत्र 'अपो योनियन्मतुषु' इति वार्तिकेन सप्तम्याः अलुक्।

**अप्सव्यः** ( ई० ४७ )—अप्सु भवः अप्सव्यः। दिगादित्वाद् यत्, ओर्गुणः, 'वान्तोयि' इत्यवादेशः। अत्र 'अपो योनियन्मतुषु' इति वार्तिकेन सप्तम्याः अलुक्।

**आमुष्यायणः** ( ई० ४६ )—अमुष्यापत्यमित्यर्थे 'नडादिभ्यः फक्' इति फकि फस्य आयन्नादेशे आदिवृद्धौ तद्धितान्तत्वात प्रातिपदिकतया तदवयवत्वात् प्राप्तस्य सुब्लुकः 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च' इति वार्त्तिकेन निषेधे नस्य णत्वे सवर्णदीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**मातुष्वसा** ( ई० ३८ )—अत्र 'विभाषा स्वसृपत्योः' इति सूत्रेण षष्ठ्याः अलुकि 'मातुः पितुर्भ्यामन्यतरस्याम्' इत्यनेन षत्वे 'मातुष्वसा' इति। षत्वाभावपक्षे 'मातुःस्वसा इति, अलुगभावपक्षे तु समासे कृते 'मातृपितृभ्यां स्वसा' इति सूत्रेण नित्यमेव षत्वे 'मातृष्वसा' इत्येकमेव रूपं भवति। असमासे तु 'मातुःस्वसा' इति।

**पितुष्वसा** ( ई० ४१, ४५, ५२ )—अत्र 'विभाषा स्वसृपत्योः' इति सूत्रेण षष्ठ्याः अलुकि 'मातुः पितुर्भ्यामन्यतरस्याम्' इत्यनेन पाक्षिके षत्वे 'पितुष्वसा' इति। षत्वाभावपक्षे 'पितुःस्वसा' इति। 'विभाषा स्वसृपत्योः' इत्यस्य वैकल्पिकत्वात् तदभावे तु समासे सति समासत्वात् प्रातिपदिकत्वेन सुपो लुकि कृते 'मातृपितृभ्यां स्वसा' इति सूत्रेण नित्यमेव षत्वे 'पितृष्वसा' इत्येकमेव रूपं ज्ञेयम्। असमासे तु 'पितुःस्वसा' इति भवति।

इत्यलुक्समासप्रकरणम्

# अथ समासाश्रयः

**ब्राह्मणितरा** ( ई० ३४, ५०, ५५ )—अतिशयिता ब्राह्मणीत्यर्थे 'अतिशायने तरतमपौ' इति तरपि 'तरतमपौ घ' इति घसंज्ञायां सत्यां 'घरूपकल्पचेलडब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः' इति ह्रस्वत्वे स्त्रीत्वाट्टापि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम् । तरप्प्रत्यये सति 'तसिलादिष्वाकृत्वसुचः' इति पुंवत्वेन ङीपो निवृत्तिस्तु न 'जातेश्च' इति निषेधात् ।

**लेखग्रहणं ज्ञापकमिति**—अयम्भावः–अण्प्रत्ययेन 'प्रत्ययग्रहणे यस्मात्–' इति परिभाषया प्रत्ययान्ततदादीत्यंशोपस्थितौ केवलप्रत्ययस्थले व्यपदेशिवद्भावेन अण्प्रत्ययान्ततदादित्वं, लेखशब्दे च अण्प्रत्ययान्तत्वं वर्तत एवेति हृल्लेखः, हृद्यम्, इत्युभयत्राऽपि हृदादेशे सिद्धे 'हृदयस्य हृल्लेखयदण्लासेषु' इति सूत्रे लेखग्रहणं व्यर्थं सत् 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति परिभाषां ज्ञापयति । लेखेति पदं घञन्तलेखशब्दबोधनार्थमिति न शङ्क्यम् अण्प्रत्ययसाहचर्येण अणन्तलेखस्यैव ग्रहणात् ।

**पदाजिः**—पादाभ्यामजतीत्यर्थे 'अज गतिक्षेपणयोः' इत्यस्माद्धातोः 'अज्यतिभ्यां पादे च' इतीण्प्रत्यये निपातनात् अजेर्व्यभावे 'पादस्य पदाज्यातिगोपहतेषु' इति सूत्रेण पादस्य अदन्तपदादेशे सवर्णदीर्घे विभक्तिकार्ये 'पदाजिः' इति ।

**पदगः** ( ई० ५३ )—पादाभ्यां गच्छतीत्यर्थे 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन गमधातोर्डप्रत्यये डित्वाट्टिलोपे 'पादस्य पदाज्यातिगोपहतेषु' इति सूत्रेण गशब्दे परे पादस्य अदन्तपदादेशे विभक्तिकार्ये 'पदगः' इति ।

**पदिकः** ( ई० ५४ )—पादाभ्यां चरतीत्यर्थे 'पर्यादिभ्यः ष्ठन्' इति ष्ठनि 'इके चरतावुपसंख्यानम्' इति ष्ठनः इकादेशे तस्मिन् परे पादस्य पदादेशे च कृते विभक्तिकार्ये 'पदिकः' इति ।

**पद्धिमम्** ( ई० ५१ ) पादस्य हिममिति विग्रहे समासे सति 'हिमकाषिहतिषु च' इति सूत्रेण हिमशब्दोत्तरपदे परे पादस्य पदादेशे सन्ध्यादिकार्ये 'पद्धिमम्' इति ।

**पच्छः** ( ई० ५२ )—'संख्यैकवचनाच्च वीप्सायाम्' इति पादशब्दात् शस्प्रत्यये 'ऋतः शे' इति पादस्य पदादेशे चुत्वे छत्वे 'तद्धितश्चासर्वविभक्तिः' इत्यव्य-

यत्वे तद्धितान्तत्वात् सोर्लुकि सस्य रुत्वे विसर्गे 'पच्छः' इति । गायत्रीं पच्छः शंसति । पादं पादमित्यर्थः ।

**उदमेघः** ( ई० ३६ )—उदकपूर्णमेघसादृश्यात् कस्यचिदियं संज्ञा । अत्र 'उदकस्य उदः संज्ञायाम्' इति सूत्रेण उदकस्य उदादेश इति विशेषः ।

**उदकुम्भः** ( ई० ४३, ४४, ४९, ५४ )—उदकेन पूर्णः–उदकपूर्णः । स चाऽसौ कुम्भश्चेति विग्रहे मध्यमपदलोपिसमासे कृते–असंयुक्तहलादौ पूरयितव्यवाचके कुम्भशब्दोत्तरपदे परे 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्यनेन उदकशब्दस्य उदादेशे विभक्तिकार्ये 'उदकुम्भः' इति । पक्षे 'उदककुम्भः' इति भवति ।

**उदमन्थः** ( ई० ५३ )—उदकमिश्रो मन्थः इति विग्रहे मध्यमपदलोपिसमासे कृते 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च' इति सूत्रेण उदकस्य उदादेशे विभक्तिकार्ये 'उदमन्थः' इति । पक्षे 'उदकमन्थः' इति भवति । द्रवद्रव्य-सम्पृक्ताः सक्तवो मन्थः । भर्जितयवपृष्टानि सक्तवः इति यावत् ।

**उदौदनः** ( ई० ४१ )—उदकमिश्रः ओदनः इति विग्रहे मध्यमपदलोपिसमासे कृते 'मन्थौदन–' इति सूत्रेण उदकस्य उदादेशे वृद्धौ विभक्तिकार्ये 'उदौदनः' इति । पक्षे 'उदकौदनः' इति ।

**कौमुदगन्धीपुत्रः** (ई० ३१)—कुमुदगन्ध इव गन्धो यस्य सः कुमुदगन्धिः 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहौ कुमुदगन्ध-शब्दे पूर्वखण्डे उत्तरस्य गन्धशब्दस्य लोपे 'उपमानाच्च' इतीत्वं ततः कुमुदगन्धेरपत्यं स्त्रीत्यर्थे 'तस्यापत्यम्' इत्यण् । 'अणिञोरनार्षयोः' इति ष्यङादेशः 'यस्येति च' इतीकारलोपः आदिवृद्धौ यङश्चाप् । एवं कौमुदगन्ध्याशब्दो निष्पन्नः । ततः 'कौमुद-गन्ध्यायाः पुत्रः' इति विग्रहे षष्ठीसमासे सुब्लुकि कौमुदगन्ध्या पुत्र इति स्थिते 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' इति ष्यङः सम्प्रसारणेन यकारस्येकारे 'सम्प्र-सारणाच्च' इति पूर्वरूपे 'सम्प्रसारणस्य' इति दीर्घे 'कौमुदगन्धीपुत्रः' इति रूपम् ।

**परमकारीषगन्धीपुत्रः** ( ई० ३०, ५३ )—ननु करीषस्य गन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति समासे गन्धशब्दस्य लोपे च कृते 'उपमानाच्च' इतीत्वे करीषगन्धः इति ततः तस्यापत्यं स्त्रीत्यर्थे 'तस्यापत्यमि'त्यणि 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' इति तस्य ष्यङादेशे 'यस्येति च' इतीकारलोपे आदिवृद्धौ 'यङश्चाप्' इति चापि कारीषगन्ध्या

इति, परमा च सा कारीषगन्ध्या च परमकारीषगन्ध्या, तस्याः पुत्र इति षष्ठीसमासे सुब्लुकि परमकारीषगन्ध्या पुत्र इति स्थिते 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' इति सम्प्रसारणेन यकारस्येकारे 'सम्प्रसारणस्य' इति दीर्घे च परमकारीषगन्धीपुत्रः इति रूपम्। नन्वत्र ष्यङः कारीषगन्धीशब्दादेव विहितत्वेन परमकारीषगन्ध्याशब्दस्य सपूर्वपदस्य ष्यङन्तत्वाभावात् प्रत्ययग्रहणे तदादिनियमाच्च सम्प्रसारणमत्र दुर्लभमिति चेन्न, 'स्त्रीप्रत्यये चानुपसर्जनेन' इति तदादिनियमप्रतिषेधात्।

**उपसर्जने तु तदादिनियमान्नेह-अतिकरीषगन्ध्यपुत्रः** ( ई० ३५, ४६ )—अयंभावः–कारीषगन्ध्यामतिक्रान्तः इति विग्रहे 'अत्यादयः–' इति समासे सुब्लुकि उपसर्जनह्रस्वे स्वादिकार्ये 'अतिकारीषगन्ध्यः' इति। तस्य पुत्र 'अतिकारीषगन्ध्यपुत्रः। अत्र 'स्त्रीप्रत्यये तदादिनियमो न' इति निषेधो न भवति, अनुपसर्जन एव स्त्रीप्रत्यये तस्य निषेधस्य प्रवृत्तेः। ष्यङ्त्वयं स्त्रीप्रत्ययोऽत्र उपसर्जन एव। अतस्तत्र तदादिनियमसत्त्वात् 'अतिकारीषगन्ध्यशब्दो नैव ष्यङन्तः इति न तत्र 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' इति सम्प्रसारणमिति दिक्।

**कारीषगन्धीबन्धुः** ( ई० ३२, ४२, ५५ )—कारीषगन्ध्या बन्धुरस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि पत्युत्तरपदत्वाऽभावात्, तत्पुरुषत्वाऽभावाच्च 'ष्यङः सम्प्रारणं पुत्रपत्योस्तत्पुरुषे' इति सूत्राऽप्राप्त्या 'बन्धूनि बहुव्रीहौ' इति सूत्रेण सम्प्रसारणे 'सः सम्प्रसारणस्य' इति दीर्घे स्वादिकार्ये उक्तं रूपं जातम्।

**अग्निमिन्धः** ( ई० ३८, ४२ )—अग्निमिन्धे दीपयतीति विग्रहे उपपद-समासे सुपो लुकि सति 'भ्राष्ट्राग्नयोरिन्धे' इति वार्तिकेन इन्धशब्दोत्तरपदे परतः सुमागमे स्वादिकार्ये उक्तं रूपं सिद्धम्।

**तिमिङ्गिलः** ( ई० ५१ )—तिमिर्मत्स्यविशेषः, तं गिलतीति विग्रहे गॄधातोः मूलविभुजादित्वात् कप्रत्यये। 'ऋत इद्धातोः' इति इत्वे रपरत्वे 'अचि विभाषा' इति लत्वे उपपदसमासे सुब्लुकि 'गिलेऽगिलस्य' इति वार्तिकेन मुमि अनुस्वारे परसवर्णे विभक्तिकार्ये उक्तं रूपं निष्पन्नम्।

**रात्रिमटः** ( ई० ५४ )—रात्रिमटतीति रात्रिमटः। सुप्युपपदे मूलविभुजादित्वात् कप्रत्यये कृते उपपदसमासे सुब्लुकि 'रात्रेः कृति विभाषा' इति मुमि विभक्तिकार्ये 'रात्रिमटः' इति। पक्षे यणि 'रात्र्यटः' इति।

**सराक्षसीका** ( ई० ४० )—राक्षस्याः सह इति विग्रहे 'तेन सहेति तुल्य-योगे' इति समासे सुब्लुकि 'नद्यृतश्च' इति कपि 'द्वितीये चानुपाख्ये' इति सहस्य सादेशे स्त्रीत्वाट्टापि विभक्तिकार्ये 'सराक्षसीका' इति । 'निशा' इति शेषः । अनुमेय-राक्षसीसहिता निशेत्यर्थः ।

**सगर्भ्यः** ( ई० ३७, ४३ )—समानः गर्भो यस्येति विग्रहे 'तद्धितार्थ—' इति समासे सुपो लुकि 'समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु' इत्यनेन समानस्य सभावे स्वादिकार्ये 'सगर्भः' इति । ततः सगर्भे भवः इत्यर्थे 'सगर्भसयूथसनुताद्यत्' इति सूत्रेण यत्प्रत्यये 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'सगर्भ्यः' इति ।

**सज्योतिः** ( ई० ३०, ४६ )—समानं ज्योतिर्यस्येति विग्रहे 'अनेकमन्य-पदार्थे' इति समासे सुपो लुकि 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयो-वचनबन्धुषु' इति सूत्रेण समानस्य सभावे विभक्तिकार्ये 'सज्योतिः' इति ।

**सतीर्थ्यः** (ई० ५३ )—समाने तीर्थे वासीत्यर्थः । सामीप्ये सप्तमी । समान-शब्दस्तु एकपर्यायः । तीर्थशब्दो गुर्वर्थे वर्तते । तदाह मूले 'एकगुरुकः' इति । समाने तीर्थे ( गुरौ ) वसतीति तद्धितार्थे 'समानतीर्थे वासी' इति सूत्रेण समान-तीर्थशब्दात् सप्तम्यन्तात् यत्प्रत्यये 'यस्येति च' इत्यकारलोपे 'तीर्थे ये' इति समानस्य सभावे विभक्तिकार्ये 'सतीर्थ्यः' इति ।

**सोदर्यः** ( ई० ४५ )—समानोदरे शयितः इत्यर्थे 'सोदराद्यः' इति यप्रत्यये विवक्षिते 'विभाषोदरे' इति समानस्य सभावे ततो यप्रत्यये 'यस्येति च' इत्यकार-लोपे गुणे विभक्तिकार्ये 'सोदर्यः' इति। 'विभाषोदरे' इति विकल्पपक्षे तु समानमुदर-मिति विग्रहे 'पूर्वापरप्रथम—' इत्यादिना समासे कृते 'समानोदरे शयित ओ चोदात्तः' इति यति 'समानोदर्यः' इति भवति ।

**भीरुष्ठानम्** ( ई० ४० )—भीरोः स्थानमिति षष्ठी समासे कृते सुब्लुकि 'भीरोः स्थानम्' इति सूत्रेण सस्य षत्वे ष्टुत्वे विभक्तिकार्ये 'भीरुष्ठानम्' इति । असमासे तु 'भीरोः स्थानम्' इति भवति ।

**रोहिणीषेणः** (ई० ५५)—रोहिण्याः सेणः इति विग्रहे समासे सति सुपो लुकि 'नक्षत्राद्वा' इति विभाषया षत्वे णत्वे विभक्तिकार्ये 'रोहिणीषेणः–' इति । पक्षे रोहि-णीसेनः' इति भवति ।

**अन्यदुत्सुकः** ( ई० ३६ )—अन्यः उत्सुकः इति विग्रहे विशेषणसमासे सुब्लुकि 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति दुगागमे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**अन्यदीयः** ( ई० ५४ )—अन्यस्यामयम् अन्यदीयः । गहादेराकृतिगणत्वात् छे प्रत्यये कृते छस्य ईयादेशे 'अषष्ठ्यतृतीयास्थस्य-' इति दुगागमे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**कदश्वः** ( ई० ३०, ३२, ५१ )—कुत्सितोऽश्वः कदश्वः । 'कुगतिप्रादयः' इति समासे सुपो लुकि 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशे विभक्तिकार्ये 'कदश्वः' इति ।

**कदन्नम्** ( ई० ३५ )—कुत्सितमन्नमिति विग्रहे 'कुगतिप्रादयः' इति समासे सुब्लुकि 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशे विभक्तिकार्ये 'कदन्नम्' इति ।

**कत्त्रयः** ( ई० ३१ )—कुत्सितास्त्रयः इति विग्रहे 'कुगतिप्रादयः' इति समासे सुपो लुकि 'त्रौ च' इति वार्तिकेन कुशब्दस्य कदादेशे विभक्तिकार्ये 'कत्त्रयः' इति ।

**कापथम्** ( ई० ४९ )—कुत्सितः पन्था इति विग्रहे 'कुगति-' इति समासे सुब्लुकि 'कापथ्यक्षयोः' इति कुशब्दस्य कादेशे 'ऋक्पूरब्धूः-' इति अप्रत्यये टिलोपे 'पथः संख्याव्ययादेः' इति नपुंसकत्वे विभक्तिकार्ये 'कापथम्' इति ।

**कापुरुषः** ( ई० ५१ )—कुत्सितः पुरुषः इति विग्रहे 'कुगति-' इति समासे सुपो लुकि 'विभाषा पुरुषे' इति कुशब्दस्य विभाषया कादेशे विभक्तिकार्ये 'कापुरुषः' इति । पक्षे 'कुपुरुषः' इति ।

**कवोष्णम्** ( ई० ५५ )—कुत्सितमुष्णम् इति विग्रहे 'कुगतिप्रादय' इति समासे सुपो लुकि 'कवं चोष्णे' इति सूत्रेण विभाषया कुशब्दस्य कवादेशे गुणे विभक्तिकार्ये 'कवोष्णम्' इति । कादेशे 'कोष्णम्' इति । उभयाऽभावे 'कोः कत्तत्पुरुषे' इति कदादेशे 'कदुष्णम्' इति ।

**दूडाशः** ( ई० ५० )—दुःखेन दास्यते दूडाशः । दुर् दाश इति स्थिते 'दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च' इति वार्तिकेन रेफस्य उत्वे सवर्णदीर्घे दाशेः दकारस्य ष्टुत्वेन डकारे विभक्तिकार्ये 'दूडाशः' इति ।

**दूडभः** ( ई० ४२ )—दुःखेन दभ्यते इति दूडभः। दुर् दभ इति स्थिते 'दुरो दाशनाशद–' इति वार्तिकेन रेफस्य उत्त्वे सवर्णदीर्घे दभेर्दकारस्य ष्टुत्वेन डकारे विभक्तिकार्ये 'दूडभः' इति।

**दूढ्यः** ( ई० ३३ )—दुःखेन ध्यायतीति दूढ्यः' दुरुपपदात् 'ध्यै चिन्तायाम्' इति धातोः 'आतश्चोपसर्गे कः' इति कप्रत्यये 'आदेच उपदेशेऽशिति' इत्यात्वे 'आतो लोप इटि च' इत्याल्लोपे 'दुर् ध्य' इति स्थिते 'दुरो दाशनाशद–' इति वार्तिकेन रेफस्य उत्त्वे सवर्णदीर्घे धस्य ष्टुत्वेन ढत्वे विभक्तिकार्ये 'दूढ्यः' इति।

**बृसी** ( ई० ४४ )—ब्रुवन्तोऽस्यां सीदन्तीति 'बृसी'। सद्धातोरधिकरणेऽर्थे डट् डित्वसामर्थ्यादभस्यापि टेर्लोपे 'स'। इति ततः 'ब्रुवत् स' इति स्थिते उपपदसमासे सुब्लुकि 'पृषोदरादीनि यथोपदिष्टम्' इत्युक्तत्वात् ब्रुवच्छब्दस्य 'बृ' इत्यादेशे 'टिड्ढाणञ्–' इति ङीपि विभक्तिकार्ये 'बृसी' इति।

**द्विगुणाकर्णः** ( ई० ३६, ४९ )—द्विगुणौ कर्णौ यस्येति बहुव्रीहौ सुब्लुकि 'कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य' इति सूत्रेण लक्षणवाचकस्य द्विगुणशब्दस्य दीर्घे विभक्तिकार्ये उक्तं रूपं जातम्।

**मर्माविधत्** ( ई० ५५ )—मर्माणि विध्यतीति मर्माविधत्। सम्पदादित्वात् कर्मणि क्विपि 'ग्रहिज्या–' इति सम्प्रसारणे उपपदसमासे सुपो लुकि नलोपे 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति दीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**पुरगावणम्** ( ई० ४७, ५२ )—पुरगाणां वनमिति विग्रहे षष्ठीसमासे सुब्लुकि 'वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्' इत्यनेन दीर्घे 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः' इत्यनेन णत्वे विभक्त्यादिकार्ये 'पुरगावणम्' इति। इदं च पुरगादिपञ्चकस्य णत्वविधानं नियमार्थम्, तथाहि–पुरगामिश्रकेति दीर्घनिर्देशादसंज्ञायां दीर्घाऽभावेन संज्ञायामेव णत्वमित्येवं च 'पूर्वपदात्संज्ञायाम्' इत्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधानं व्यर्थं सत्–'वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं न त्वन्येभ्यः' इति ज्ञापयति।

**परीपाकः** ( ई० ३२, ४९, ५४ )—पचेर्भावे घञि उपधावृद्धौ 'चजोः कु घिण्यतोः' इति कुत्वे विभक्तिकार्ये 'पाकः' इति। ततः परीत्युपसर्गेण समासे सुब्लुकि

उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घे विभक्तिकार्ये 'परीपाकः' इति। दीर्घाभावे 'परिपाकः' इति भवति।

**वीकाशः** ( ई० ३१ )—काशृ दीप्तौ इति धातोः पचाद्यच् 'काशः' इति। विगतः काशः इति विग्रहे प्रादिसमासे सुब्लुकि 'इकः काशे' इति सूत्रेण इगन्तोपसर्गस्य दीर्घे विभक्तिकार्ये 'वीकाशः' इति।

**विश्वामित्रः** ( ई० ५१, ५५ )—विश्वस्य मित्रः इति षष्ठीसमासे कृते सति सुब्लुकि 'मित्रे चर्षौ' इति सूत्रे मित्रशब्दोत्तरपदे परे विश्वशब्दस्य दीर्घे विभक्तिकार्ये 'विश्वामित्रः' इति। ऋषि भिन्ने तु 'विश्वमित्रः' इति भवति।

**प्रवणम्** ( ई० ३०, ४८ )—प्रकृष्टं वनमिति विग्रहे 'कुगतिप्रादयः' इति समासे सुपो लुकि 'प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि' इति वनशब्दस्य नकारस्य णत्वे विभक्तिकार्ये 'प्रवणम्' इति।

**दूर्वावणम्** ( ई० ४० )—दूर्वायाः वनमिति विग्रहे षष्ठीसमासे सति सुब्लुकि 'विभाषौषधिवनस्पतिभ्यः' इति पाक्षिके णत्वे विभक्तिकार्ये 'दूर्वावणम्' इति। णत्वाभावे दूर्वावनमिति।

**शिरीषवणम्** ( ई० ३५ )—शिरीषस्य वनमिति विग्रहे षष्ठीसमासे सुपो लुकि 'विभाषौषधिवनस्पतिभ्यः' इति विभाषया णत्वे स्वादिकार्ये 'शिरीषवणम्' इति। पक्षे शिरीषवनम्' इति भवति। 'लुपि युक्तवद्व्यक्तिवचने' इति सूत्रस्थभाष्यादत्र वनस्पतिशब्देन वृक्षसामान्यं विवक्षितम्। 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद् वनस्पतिः' इति कोशस्तु न मृग्यः।

**क्षीरपाणाः** ( ई० ४१ )—पीयते इति पानम्। कर्मणि ल्युट्, नतु भावे। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। अत्र 'पानं देशे' इति सूत्रेण णत्वम्। देशविशेषे बहुवचनान्तोऽयम्।

**क्षीरपाणम्** ( ई० ५४ )—क्षीरस्य पानं क्षीरपानम्। षष्ठीसमासः। भावे करणे वा ल्युट्। 'अत्र 'वा भावकरणयोः' इति वा णत्वम्।

**गर्गभगिनी** ( ई० ३४, ४६ )—गर्गाणां भगिनी गर्गभगिनी। षष्ठीसमासः। अत्र 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन णत्वं कुतो नेति न शङ्क्यम्, 'प्रातिपदिकान्त' इति पदस्योत्तरपदं यत्प्रातिपदिकं तस्यान्तावयवो यो नकारस्तस्यैव णत्व

मिति वार्तिककृतसम्पत्तोर्थो भवति । तथा च 'गर्गभगिनी' इति समासस्थले उत्तरपदं प्रातिपदिकं 'भगिनी' इति, तस्यान्तावयव इकारो न तु नकार इति तत्र णत्वं न भवति ।

इत्थञ्च नुम्ग्रहणमपि सफलं भवति । अन्यथा प्रातिपदिकान्तावयवो यो नकारस्तस्य णत्वं स्यादिति सामान्यार्थे तु 'व्रीहिवापाणि' इति प्रयोगे व्रीहिवापेति प्रातिपदिकस्यान्तावयवो नकारोऽस्त्येवेति प्रातिपदिकान्तेत्यंशेनैव णत्वसिद्धौ नुमो निष्फलत्वं स्पष्टमेव । उत्तरपदं यदित्याद्यर्थे तु व्रीहिवापेति समुदायस्यान्तावयवो नुम् भवति न तु वापेति उत्तरपदस्यान्तावयव इति तदर्थं नुम्ग्रहणं कर्त्तव्यमिति ।

**रम्ययूना** ( ई० ४२ )—रम्यश्चाऽसौ युवा चेति कर्मधारयसमासे कृते सुब्लुकि सति 'रम्ययुवन्' शब्दात् तृतीयैकवचने नकारस्य प्रातिपदिकान्तत्वात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वे प्राप्ते 'युवादेर्न' इति वार्तिकेन निषेधे सम्प्रसारणादिकार्ये उक्तं रूपं सिद्धम् ।

**परिपक्वानि** ( ई० ३९ )—परिनिष्ठितं पक्वं परिपक्वं तानि 'परिपक्वानि' प्रादिसमासः । अत्र प्रथमाबहुवचने नुमि कृते सति नुमो नकारस्य 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पं णत्वं बाधित्वा 'कुमति च' इति नित्ये णत्वे प्राप्ते 'युवादेर्न' इति निषेधे उक्तं रूपं सिद्धम् भवति ।

**हरिकामिणौ** ( ई० ४०, ४५ )—हरिं कामयते इति हरिकामी तौ हरिकामिणौ । उपपदसमासः । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । अत्र द्विवचने 'प्रातिपदिकान्तत्वात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति नित्ये णत्वे प्राप्ते तम्प्रबाध्य 'कुमति च' इति नित्यं णत्वं भवति ।

**माषकुम्भवापेन** ( ई० ३८ )—माषाणां कुम्भः माषकुम्भः, तस्य वापः इति षष्ठीसमासः । अत्र निमित्तकार्यिणो षकारनकारयोः कुम्भपदेन व्यवधानात् 'पदव्यवायेऽपि' इति निषेधे णत्वं नेति ।

**शुष्कगोमयेण** ( ई० ४५ )—गोः पुरीषं गोमयम् । 'गोश्च पुरीषे' इति मयटि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि विभक्तिकार्ये 'गोमयम्' इति । ततः शुष्कं गोमयमिति कर्मधारये कृते तृतीयाविभक्तौ 'शुष्कगोमयेण' इति भवति । अत्र प्रत्ययलक्षणेन अन्तर्वर्तिनिं विभक्तिमाश्रित्य गोशब्दः मयटि परे पदमिति तेन व्यवधानात् 'पदव्यवायेऽपि' इति षात्परस्य नस्य णत्वनिषेधः कुतो नेति न शङ्क्यम्, 'अतद्धित इति वाच्यम्' इति वार्तिकेन प्रतिषेधात् ।

**विष्किरः** ( ई० ५५ )—विकिरतीति विष्किरः विकिरो वेति। कॄधातोः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये 'ऋत इद्धातोः' इति इत्त्वे रपरत्वे 'विष्किरः शकुनौ वा' इति सुटि 'परिनिविभ्यः—' इति षत्वे विष्किरः इति। सुडभावे 'विकिरः' इति।

**विष्किरः शकुनौ वा** ( ई० ४५ )—केचित्तत्र वावचनेनैव सुड्विकल्पे सिद्धे 'विष्किरः शकुनौ विकिरो वा' इति वृत्तिग्रन्थोक्तसूत्रपाठे विकिरग्रहणं विष्किरः विकिरः शकुनावेवेति नियमार्थम्, तेन शकुनेरन्यत्र उभयोरपि शब्दयोः प्रयोगो नेति वदन्ति। तन्न युक्तिसहम्, भाष्यादौ 'विकिरं वैश्वदेविकम्' इत्यादिप्रयोगदर्शनात्।

**प्रतिष्कशः** ( ई० ४१ )—प्रतिकशतीति प्रतिकशः। 'कुगतिप्रादयः' इति समासः। पचाद्यच्। अत्र 'प्रतिष्कशश्च कशेः' इति सूत्रेण निपातनात् सुट् षत्वं च। सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते।

**अजस्तुन्दम्** ( ई० ५५ )—अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम्। 'कास्तीराजस्तुन्दे नगरे' इति सूत्रेण निपातनादस्य सिद्धिर्भवति।

**किष्किन्धा** ( ई० ४४ )—किं किमपि वानरसैन्यं धत्ते इति किष्किन्धा। 'आतोऽनुपसर्गे कः' इति कप्रत्यये टापि 'पारस्करप्रभृतीनि च संज्ञायाम्' इति निपातनात् किमो द्वित्वे मलोपे सुटि षत्वे च कृते मस्यानुस्वारे परसवर्णे स्वादिकार्ये 'किष्किन्धा' इति।

**बृहस्पतिः** ( ई० ३२ )—बृहती वाक्, तस्याः पतिः बृहस्पतिः। अत्र 'कुक्कुट्यादीनामण्डादिषु' इति पुंवत्त्वे सति 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति पारस्करादिगणपठितसूत्रेण सुटि तलोपे च कृते स्वादिकार्ये 'बृहस्पतिः' इति सिद्धम्।

इति समासाश्रयः

---

# अथ अपत्याधिकारः

**आश्वपतम्** ( ई० ५५ )—अश्वपतेरपत्यमित्यर्थे 'तस्यापत्यम्' इत्यपत्यार्थे 'अश्वपत्यादिभ्यश्च' इति सूत्रेण अणि 'सुबन्तात् तद्धितोत्पत्तिः' इति पक्षे 'अश्वपति ङस् अण्' इति जाते 'कृत्तद्धितसमासाश्च' इति तद्धितान्तत्वात् प्रातिपदिकत्वे 'सुपो

धातुप्रातिपदिकयोः' इति सुपो लुकि अणो णकारस्येत्संज्ञायां लोपे च कृते 'तद्धितेष्व-चामादेः' इत्यादिवृद्धौ 'यचि भम्' इति भत्वे 'यस्येति च' इति इकारलोपे 'आश्वपत' इति जाते एकदेशविकृतन्यायेन 'कृत्तद्धितसमासाश्च' इति समुदायात् सौ सोरमि पूर्वरूपे 'आश्वपतम्' इति सिद्धम् ।

**दैत्यः** ( ई० ५०, ५२ )—दितेरपत्यमिति विग्रहे 'दित्यदित्यादित्यपत्युत्तर-पदाण्यः' इति सूत्रेण ण्यप्रत्यये 'चूटू' इति णकारस्येत्संज्ञायां लोपे च कृते 'तद्धिते-ष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'दैत्यः' इति ।

**पार्थिवा** ( ई० ५४ )—पृथिव्याः अपत्यादीति विग्रहे 'पृथिव्या ञाञौ' इति वार्तिकेन अप्रत्यये 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ रपरत्वे 'यस्येति च' इति इकार-लोपे अदन्तत्वात् टापि विभक्तिकार्ये 'पार्थिवा' इति । ञि पक्षे 'टिड्ढाणञ्–'इति ङीपि 'पार्थिवी' इति भवति ।

**उडुलोमाः** ( ई० ४० )—उडूनि नक्षत्राणीव लोमानि यस्य सः उडुलोमा, तस्यापत्यमिति विग्रहे 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इति वार्तिकेन अकार-प्रत्यये 'नस्तद्धिते' इति टिलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाबहुवचने जसि सवर्णदीर्घे सस्य रुत्वे विसर्गे 'उडुलोमाः' इति । केवलस्य लोम्नः अपत्ययो-गाऽसम्भवात् प्रत्ययविधित्वेऽपि तदन्तविधिः ।

**औडुलोमिः** ( ई० ५४ )—उडुलोम्नः अपत्यमिति विग्रहे अपत्यबहुत्वाऽ-भावात् 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इति वार्तिकस्याप्रवृत्त्या बाह्वादित्वा-दिञि 'नस्तद्धिते' इति टिलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

**कालेयम्** ( ई० ५५ )—कालेरपत्यमिति विग्रहे 'अग्निकलिभ्यां ढग्वक्तव्यः' इति ढकि ढस्य एयादेशे कित्त्वादादिवृद्धौ 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'कालेयम्' इति ।

**पञ्चकपालः** ( ई० ५५ ) पञ्चसु कपालेषु संस्कृतः पुरोडाशः इत्यर्थे 'संस्कृतं भक्षाः' इत्यणि विवक्षिते 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासे ततोऽणि 'द्विगोर्लुगनपत्ये' इति अणो लुकि 'प्रत्ययस्य लुक्श्लुलुपः' इति प्रत्ययलक्षणाभावात् 'तद्धितेष्वचामादेः' इत्यस्याप्राप्तौ तद्धितान्तत्वात् सौ रुत्वे विसर्गे च कृते 'पञ्चकपालः' इति ।

**पाञ्चकपालम्** ( ई० ३९ )—पञ्चसु कपालेषु संस्कृतः पुरोडाशः इत्यर्थे अणि विवक्षिते द्विगुसमासे 'द्विगोर्लुगनपत्ये' इति अणो लुकि 'पञ्चकपालः' इति। तस्येदमिति विग्रहे 'तस्येदम्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ विभक्त्यादिकार्ये 'पाञ्चकपालम्' इति। अत्र 'तस्येदम्' इति विहिताऽणो लुग् न भवति, अणो द्विगुनिमित्तत्वाऽभावात्।

**गार्गीयाः** ( ई० ३७, ४५ )—गर्गस्य गोत्रापत्यमिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'गार्ग्यः' इति। तस्यापत्यमिति विग्रहे 'वृद्धाच्छः' इति छप्रत्यये छस्य ईयादेशे 'गार्ग्य ईय' इति स्थिते 'यस्येति च' इत्यनेन यञोऽकारस्य लोपे 'गार्ग्य् ईय्' इति स्थिते 'आपत्यस्य च तद्धितेऽनाति' इति सूत्रेण यलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाबहुवचने जसि सवर्णदीर्घे सस्य रुत्वे विसर्गे 'गार्गीयाः' इति। अत्र यलोपारम्भसामर्थ्यादेव अल्लोपस्य नासिद्धत्वमिति तत्त्वम्।

**ग्लुचुकायनिः** ( ई० ३१, ३२ )—ग्लुचुकस्य गोत्रापत्यमिति विग्रहे 'प्राचामवृद्धात् फिन् बहुलम्' इति फिनि फस्य आयन्नादेशे सवर्णदीर्घे विभक्तिकार्ये 'ग्लुचुकायनिः' इति।

**ग्लौचुकायनः** ( ई० ४६ )—ग्लुचुकस्य गोत्रापत्यमिति विग्रहे 'अत इञ्' इति सूत्रं प्रबाध्य 'प्राचामवृद्धात् फिन् बहुलम्' इत्यनेन ग्लुचुकशब्दात् फिन्प्रत्यये फस्याऽऽयन्नादेशे 'यस्येति च' इत्यलोपे स्वादिकार्ये 'ग्लुचुकायनिः' इति। ततः ग्लुचुकायनेरपत्यमिति विग्रहे 'तस्याऽपत्यम्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इतीकारलोपे स्वादिकार्ये 'ग्लौचुकायनः' इति। 'ग्लौचुकायनस्य छात्रः' इत्यर्थेऽपि 'यूनि लुक्' इत्यनेन प्राग्दीव्यतीये अजादौ प्रत्ययविवक्षिते युवप्रत्ययस्याऽणो लुकि निमित्ताऽपाये नैमित्तिकस्याप्यपाये 'ग्लुचुकायनि' इति तस्मात् 'तस्येदम्' इत्यणि आदिवृद्धौ 'यस्येति चे'ति इकारलोपे स्वादिकार्ये 'ग्लौचुकायनः' इति।

( ननु युवापत्याऽणः 'यस्येति चे'ति लोपेनैव छात्रार्थेऽपि 'ग्लौचुकायनः' इति रूपसिद्धेस्तस्य 'यूनि लुक्' इति लुग्विधानं किमर्थमिति चेन्न, छात्रार्थकछप्रवृत्तेः प्रागेव युवप्रत्ययस्याऽणो लुकि आदिवृद्धेर्निवृत्तौ 'ग्लुचुकायनिशब्दस्य वृद्धत्वाऽभावात् छो न भवति। युवप्रत्ययस्य लुगभावे तु वृद्धत्वाच्छस्यादेवेति दिक्। )

**पैलः** ( ई० ४८, ५३, ५५ )—पीलायाः गोत्रापत्ये युवापत्ये वा पैलशब्दः इति द्योतयितुमुक्तं मूले-पैलः पिता पुत्रश्चेति । यूनः पिता युवा चेत्यर्थः । पीलायाः गोत्रापत्यमित्यर्थे 'स्त्रीभ्यो ढक्' इति ढकं बाधित्वा 'पीलाया वा' इत्यणि आदिवृद्धौ 'यस्येति च' इत्यल्लोपे विभक्तिकार्ये 'पैलः' इति । तस्मात् पैलस्यापत्यं युवेत्यर्थे पैलशब्दात् 'अणो द्व्यचः' इति फिञि 'पैलादिभ्यश्च' इति तस्य लुकि विभक्तिकार्ये च 'पैलः' इति ।

**पान्नागारिः** ( ई० ३५ )—'पन्नागारः' इति कश्चित् प्राग्देशीयः । तस्य गोत्रापत्यमित्यर्थे 'अत इञ्' इति इञि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'पान्नागारिः' इति । तस्मात् पान्नागारेरपत्यं युवेत्यर्थे पान्नागारिशब्दात् 'यञिञोश्च' इति फकि 'इञः प्राचाम्' इति तस्य लुकि विभक्तिकार्ये 'पान्नागारिः' इति । एवञ्च पन्नागारस्य युवापत्ये 'पान्नागारिः' इत्येव रूपमित्यवसेयम् । इदमेव द्योतयितुमुक्तं मूले 'पान्नागारिः पिता पुत्रश्चे'ति ।

**कातीयाः** ( ई० ४१, ५२ )—कतस्य गोत्रापत्यमित्यर्थे 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ 'यस्येति च' इत्यल्लोपे विभक्तिकार्ये 'कात्यः' इति । तस्मात् कात्यस्यापत्यं युवेत्यर्थे कात्यशब्दात् 'यञिञोश्च' इति फकि फस्य आयन्नादेशे सवर्णदीर्घे विभक्तिकार्ये 'कात्यायनः' इति । तस्मात् कात्यायनस्य छात्राः इत्यर्थे कात्यायनशब्दात् 'वृद्धाच्छः' इति छात्रार्थकच्छप्रत्यये विवक्षिते एव 'फक्फिञोरन्यतरस्याम्' इति सूत्रेण युवार्थकफको लुकि ततः छप्रत्यये छस्य ईयादेशे 'कात्य ईय' इति स्थिते 'यस्येति च' इत्यकारलोपे 'आपत्यस्य च तद्धितेऽनाति' इति यलोपे विभक्त्यादिकार्ये प्रथमाबहुवचने 'कातीयाः' इति रूपं सिद्धम् । फको लुगभावे तु फस्यायनादेशे 'कात्यायनीयाः' इति भवति ।

**यास्कीयाः** ( ई० ३३ )—यस्कस्य गोत्रापत्यमित्यर्थे 'अत इञ्' इति सूत्रमपवाद्य 'शिवादिभ्योऽण्' इत्यणि आदिवृद्धौ 'यस्येति च' इत्यल्लोपे विभक्तिकार्ये 'यास्कः' इति । ततः यास्कस्यापत्यं युवेत्यर्थे 'अणो द्व्यचः' इति फिञि फस्य आयन्नादेशे सवर्णदीर्घे विभक्तिकार्ये 'यास्कायनिः' इति । ततः यास्कायनेः छात्राः इत्यर्थे 'वृद्धाच्छः' इति छप्रत्ययविवक्षिते 'फक्फिञोरन्यतरस्याम्' इत्यनेन युवार्थकफिञो लुकि ततः छप्रत्यये सति छस्य ईयादेशे 'यास्क ईय' इति स्थिते 'यस्येति च' इत्यकारलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां जसि सवर्णदीर्घे सस्य रुत्वे विसर्गे

च कृते 'यास्कीयाः' इति । फिञो लुगभावपक्षे तु फस्य आयनादेशे 'यास्कायनीयाः' इति रूपं भवति ।

**औपगवः** ( ई० ३४, ५३ )—उपगोरपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'औपगवः' इति । अत्र **आदिवृद्धिः अन्त्योपधावृद्धी बाधते ।** अयम्भावः–अत्र यद्यपि आदिवृद्धौ सत्यामपि देशभेदेन उभयोरपि सम्भवाद् विप्रतिषेधाभावेन बाध्य-बाधकभावाभावात् 'अचो ञ्णिति' इत्यन्त्यवृद्धिः प्राप्नोति, तथापि अनुशतिकादिषु पौष्करसादिरित्यस्य पाठात् 'सत्यपि सम्भवे बाधनं भवति' इति न्यायस्य ज्ञाप्यत्वेन आदिवृद्धिः अन्त्यवृद्धिम् , उपधावृद्धिं च बाधते । अन्यथा 'तद्धितेष्वचामादेः' इत्यादिवृद्धया 'अत उपधायाः' इति उपधावृद्धया च पौष्करसादेः सिद्धत्वाद् अनुशतिकादिगणे पुष्करसच्छब्दपाठोऽनर्थकः स्यादिति दिक् ।

(**आदिवृद्धिरिति**—अयम्भावः–उपगोरपत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणि 'उपगु अ' इति स्थिते 'ओर्गुणः' इति गुणादेशस्य 'पशव्यः' इत्यादौ सावकाशत्वादत्र गुणं बाधित्वा परत्वाद् 'अचो ञ्णिति' इति वृद्धिः प्रसङ्गः । गुणे च कृते अवादेशे सति 'अत उपधायाः' इति वृद्धिप्रसङ्गश्च स्यादत आह मूले 'आदिवृद्धिरन्त्योपधावृद्धी बाधते' इति । अयमाशयः–एकलक्ष्ये एककालावच्छेदेन कार्यद्वयस्य असम्भवरूपं विप्रतिषेधसूत्रप्रवृत्तौ निमित्तं, तच्चात्र नास्ति, यतः एकलक्ष्ये आदिवृद्धौ अन्त्यवृद्धौ च सत्यां न हि कश्चिद् विरोधः । एवमेकत्र लक्ष्ये आदिवृद्धौ उपधावृद्धौ च सत्यां नास्ति विरोधः इति विप्रतिषेधसूत्राऽप्रवृत्तौ परत्वमूलकबाधो न सम्भवति । एवमादिवृद्धौ सत्यामन्त्योपधावृद्धयोः सत्योः आदिवृद्धेश्च प्रसङ्गः इति नित्यत्वमूलकोऽपि बाधो न । अथ च सर्ववृद्धीनां प्रकृतिप्रत्यययोभयसापेक्षत्वेन अन्तरङ्गमूलकबाधाऽसम्भवः । अन्यत्र वृद्धित्रयस्य साफल्येन अपवादमूलकबाधाऽसम्भवश्चेति किम्मूलिकादिवृद्धिर्बाधिकेति सन्देहे अनुशतिकादिगणे पुष्करसच्छब्दस्य पाठो बाधकत्वे मूलम् । अन्यथा 'तद्धितेष्वचामादेः' इति सूत्रेण आदिवृद्धौ 'अत उपधायाः' इत्यनेन उपधावृद्धौ च सत्यां पौष्करसादिशब्दस्य सिद्धौ तद्गणे पुष्करसच्छब्दपाठः उभयपदवृद्धयर्थो निष्फल एवेति । )

( क ) **तस्येदमित्यपत्येपीति** ( ई० ३०, ३९, ४३, ४५, ५०, ५२ )—ननु अपत्यसमूहविकारादीनाम् इदमर्थे अन्तर्भावात् 'तस्येदम्' इत्यनेनैव 'औपगवः'

इत्यादौ अणः सिद्धौ किमर्थं 'तस्यापत्यम्' इति सूत्रमित्यत आह मूले– 'तस्येदमित्य-पत्येऽपि' बाधनार्थं कृतं भवेत्। उपसर्गः शेष एवाऽसौ वृद्धान्यस्य प्रयोजनम् ॥' इति ।' अयम्भावः–'तस्यापत्यमत इञ्' इत्येक एव योगः अदन्तेभ्यः इञर्थमस्तु, 'औपगवः' इत्यादौ इदन्तत्वेन अपत्यरूपार्थस्यापि बोधात् 'तस्येदम्' इत्यनेनैव सिद्धेः, न चात्र शेषाधिकाराद् अपत्यातिरिक्तस्यैव ग्रहणमिति वाच्यम्, अन्यशब्द-सम्बद्धापत्यरूपार्थस्योक्तत्वेऽपि उपगुशब्दसम्बद्धाऽपत्यार्थस्य अनुक्तत्वेनादोषादिति चेत् सत्यम्, भानोरपत्यं भानवः इत्यादौ वृद्धाच्छबाधनार्थं योगविभागस्यावश्यक-त्वादिति दिक्।

( ख ) **तस्येदमित्यपत्येऽपि**—अयम्भावः–'तस्येदम्' इति सूत्रेण औप-गवादिप्रयोगेऽणः सिद्धौ 'तस्यापत्यम्' इति सूत्रं व्यर्थमेव। न च 'अत इञ्' इति सूत्रे अपत्यपदानुवृत्त्यर्थं सूत्रं सफलमिति वाच्यम्। 'तस्यापत्यमत इञ्' इत्येकयोगे कर्तव्ये योगविभागस्य व्यर्थत्वात्। स एव योगविभागो व्यर्थः सन् भानवादिप्रयोगे 'तस्येदम्' इत्यस्य बाधकं यत् 'वृद्धाच्छः' इति सूत्रं तद्बाधनार्थो भवति। 'तस्येदं' 'वृद्धाच्छः' इति सूत्रद्वयस्य अपत्यादिव्यतिरिक्तार्थे एव प्रवृत्तिरिति सूत्रद्वयस्य अप-त्यार्थे प्रवृत्तिरेव न भविष्यतीति न शङ्क्यम्, यावत् 'तस्यापत्यमत इञ्' इत्येकयोगो वर्तते तावददन्तशब्दसम्बद्धापत्यरूपार्थस्योपयुक्तत्वेऽपि अन्यशब्दसम्बद्धापत्यार्थस्य शेषत्वात्, उपयुक्तादन्यः शेषः इति लक्षणात। सति योगविभागे सर्वशब्दसम्बद्धाऽ-पत्यरूपार्थस्योक्तत्वेन शेषत्वाऽभावात्। 'तस्येदम्' 'वृद्धाच्छः' इति सूत्रद्वयं स्वत एव न प्रवर्तत इति सारांशः।

( क ) **सौत्थितिः** ( ई० ३२, ३५ )—सु = शोभनः, उत्थितः सूत्थितः। प्रादिसमासे सवर्णदीर्घः। सूत्थितस्यापत्यं 'सौत्थितिः' अत इञ्, सुब्लुक् आदिवृद्धिः 'यस्येति च' इत्यकारलोपः। 'तस्यापत्यम्' इति सूत्रे कृतसन्धेरित्यस्याभावे तु 'सु उत्थित' इत्यस्यामेव दशायां सवर्णदीर्घत्वात् परत्वादादिवृद्धौ कृतायामवादेशे 'सावु-त्थितिः' इति स्यात्। नन्वत्रान्तरङ्गत्वात् सवर्णदीर्घे कृते तदुत्तरमेव इञ्प्रत्यय उचितः परादन्तरङ्गस्य बलवत्त्वात्। ततश्च सन्धेः प्राक्तद्धितोत्पत्तेरप्रसक्तेः कृतसन्धेरिति व्यर्थमेवेति चेन्न, 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया सन्धेरभावप्रसङ्गात्। तथाहि–अन्तरङ्गपरिभाषया अप्यपवादभूतया अकृतव्यूहपरिभाषायाः सन्धेः प्रागेव प्रत्ययः स्यात्, ततश्चादिवृद्धयपेक्षयाऽन्तरङ्गोऽपि सवर्णदीर्घः अकृतव्यूहपरिभाषया

आदिवृद्धेः प्राग् न प्रवर्तते। एवञ्च सवर्णदीर्घात् प्रागेवादिवृद्धौ आवादेशे सावुत्थि-तिरिति स्यादिति भावः।

( ख ) कृतसन्धेः किमिति—अयम्भावः-'समर्थानां प्रथमाद्वा' इति सूत्रे समर्थपदेन परिनिष्ठितस्य ग्रहणात् सूत्थितस्यापत्यमिति विग्रहे 'सु उत्थित' इति पदद्वयेन सह सन्धौ इञ्प्रत्यये च कृते 'सौत्थितिः' इति रूपं सिद्धयति। अन्यथा विनाशोन्मुखेन सुघटकोकारेण सह दीर्घाऽभावात् सुघटकोकारस्य वृद्धौ सावुत्थिति-रित्यनिष्टं स्यात्।

**प्रथमात् किम्**—'समर्थानां प्रथमाद्वा' इति सूत्रतोऽधिकृतस्य प्रथमादिति पदस्य प्रत्ययविधायकसूत्रेषु प्रथमोच्चारितात् सुबन्तादपत्याद्यर्थेषु प्रत्ययाः स्युरि-त्यर्थो भवति। तथा च उपगोरपत्यमिति विग्रहे प्रत्ययविधायके 'तस्यापत्यम्' इति सूत्रे तस्येति षष्ठयन्तं पदं प्रथमोच्चारितमिति षष्ठयन्तादेव उपगुशब्दात् प्रत्ययो भवति। एवञ्च उपगुरपत्यमस्येति विग्रहे प्रथमान्ताद् उपगुशब्दात् प्रत्ययो न भव-तीति फलं सिद्धम्।

**औपगवी** ( ई० ४७ )—उपगोरपत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे 'गोत्रं च चरणैः सह' इति जातित्वात् 'जातेरस्त्रीविषयादयोपधात्' इति स्त्रीत्वविवक्षायां ङीषि स्वादिकार्ये 'औपगवी' इति।

**तत्रभवान् गार्ग्यायणः** ( ई० ३६ )—तत्रभवान् इति पूज्यवाची। युव-संज्ञानामल्पवयस्कत्वेन वृद्धाधीनत्वेन सुखितया च पूजा। अत्र गार्ग्यस्यापत्यं युवेत्यर्थे गोत्रप्रत्ययान्तस्य गार्ग्यशब्दस्य 'वृद्धस्य च पूजायाम्' इति वार्तिकेन युवसंज्ञायाम् 'यञिञोश्च' इति फकि फस्य आयन्नादेशे 'यस्येति च' इत्यकारलोपे 'अनाति' इति पर्युदासात् 'आपत्यस्ये'ति यलोपाऽभावे णत्वे तद्धितान्तत्वात् सौ सस्य रुत्वे विसर्गे च कृते उक्तं रूपं सिद्धम्। अत्र युवसंज्ञाविधिसामर्थ्यात् स्वार्थे युवप्रत्ययो बोध्यः।

**गार्ग्यो जाल्मः** ( ई० ५० )—यः वृद्धाननादृत्य स्वातन्त्र्यं भजते तद्विषय-मिदम्। अत्र 'यूनश्च कुत्सायां गोत्रसञ्ज्ञेति वाच्यम्' इति वार्तिकेन गोत्रसंज्ञायां सत्यां गार्ग्यस्यापत्यमित्यर्थे अणेव भवति न तु फगिति तत्त्वम्।

**नाडायनः** ( ई० ५१ )—नडस्य गोत्रापत्ये 'नडादिभ्यः' इति फकि आदि-वृद्धौ 'यस्येति च' इति अकारलोपे फस्य आयन्नादेशे विभक्तिकार्ये 'नाडायनः' इति । 'एको गोत्रे' इति सूत्रेण गोत्रे एक एव प्रत्ययविधानादत्र प्रत्ययान्तरं नेति ।

( क ) **गोत्रे स्वैकोनसङ्ख्यानामिति** ( ई० ३१, ३३, ३८, ४०, ४२, ४७, ५१, ५३ )—अयम्भावः-उपगोर्गोत्रापत्यमिति विग्रहे 'तस्यापत्यम्' इति सूत्रेण अण्प्रत्यये औपगवप्रयोगस्य सिद्धौ 'एको गोत्रे' इति सूत्रं गोत्राधिकारे एक एव अपत्यार्थकप्रत्ययः स्यादिति नियमयति । इत्थं च अपत्यं पितुरेव भवतीति पक्षे, एकोनशतानिष्टप्रत्ययानां वारणं भवतीति फलम् । न पतन्ति पितरो नरके येन तदपत्यमिति भाष्यसिद्धान्तपक्षे पुत्रपौत्रादयः सर्वेऽपत्यशब्देन गृह्यन्ते इत्यपत्यं पितुर्भवति, पितामहादीनामपि भवतीत्यण्प्रत्ययेन इष्टगोत्रार्थे सिद्धेऽपि उपगुशब्दाच्छततम अपत्यार्थेऽभिधातुमिष्टे सति अष्टनवत्यनिष्टप्रत्ययानां निरोधो भवतीति फलम् । प्रथमपक्षे इष्टसिद्धिर्नियमश्चेति कार्यद्वयं सूत्रस्य फलम् । सिद्धान्त-पक्षे तु केवलनियमसिद्धिरिति सारांशः ।

( ख ) **'एको गोत्रे'** इति—न च 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रातिप-दिकाधिकारेण च गोत्रे एक एव प्रत्ययसिद्धे सूत्रमिदं व्यर्थमिति वाच्यम् , पितुरेवा-पत्यं गोत्रमिति मते मूलाच्छतमे गोत्रे फगिञोः परस्परायामेकोनशतानिष्टप्रत्ययो-त्पत्तौ अनिष्टापत्तेः, पितामहादीनामप्यपत्यं गोत्रमिति मते मूलाच्छततमे गोत्रे अष्टनवतिप्रत्ययानामुत्पत्तौ अनिष्टापत्तेः तदेवोक्तं मूले 'गोत्रे स्वैकोनसङ्ख्यानाम्–' इत्यादिनेति दिक् ।

( ग ) **गोत्रे स्वैकोनेति**—अयम्भावः-उपगोर्गोत्राऽपत्यमिति विग्रहे 'तस्या-पत्यम्' इति सूत्रेण अण्प्रत्यये औपगवादिप्रयोगसिद्धौ 'एको गोत्रे' इति सूत्रं 'गोत्राधिकारे एक एव अपत्यार्थकप्रत्ययः स्यादिति नियमयति । इत्थं च 'आत्मज-स्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।' इति कोशप्रामाण्येन 'पौत्रं लालयतः पितामहस्य उत्संगे बालकं दृष्ट्वा अयं बालकः कस्य अपत्यमिति कश्चित् पृच्छति । अयं बालको मदीयपुत्रस्य अपत्यमिति पिता-महः उत्तरं ददातीति लोकयुक्त्या च 'अपत्यं पितुरेव स्यात्' इति पक्षे उपगुशब्दाद् अण्प्रत्यये पौत्रादिरूपेष्टार्थस्य असिद्ध्या पौत्रार्थस्य वाचकः कश्चित्प्रत्ययो वक्तव्यः । एवं प्रपौत्ररूपार्थस्यापि वाचकः कश्चित्प्रत्ययो वक्तव्यः । एवं च उपगुशब्दात्

शततमेऽपत्यत्वेन विवक्षते एकोनशतानिष्टप्रत्ययानां वारणं भवतीति फलम्। 'अपत्यं पौत्रप्रभृतिगोत्रम्' इति सूत्रस्वारस्येन न पतन्ति पितरो नरके येन तदपत्यमिति व्युत्पत्त्या अपत्यशब्देन सर्वे पुत्रपौत्रादयो गृह्यन्ते इति अपत्यशब्देन पितुः सम्बन्धः स्यात्। पितामहादीनामपि सम्बन्धो भवतीति मुख्यपक्षे उपगुशब्दाद् अण्प्रत्यये पौत्रादिरूपेष्टार्थस्य सिद्धावपि तृतीये वाच्ये इञ् स्यात्। चतुर्थे वाच्ये फगिति रीत्या शततमे अपत्यत्वेन विवक्षिते उपगुशब्दाद् अण्प्रत्यये औपगवशब्दः शततमापत्यार्थस्य वाचकः। उपगुशब्दश्च मूलप्रकृतिरिति प्रकृतिद्वयमिष्टं मध्ये च इञादिघटिताऽष्टनवत्यनिष्टप्रकृतयो न भवन्तीति फलम्। उपगोस्तृतीयं यद्यपत्यत्वेन विवक्षितं तदा उपगोरपत्यमिति विग्रहे औपगवशब्दः उपगोः पौत्रस्य वाचकः। अथ च यदि द्वितीयम् अपत्यत्वेन विवक्षितम्, तदा औपगवशब्दः उपगोः पुत्रस्य वाचकः। एवं रीत्या एक एव औपगवशब्दः सर्वेषामपत्यानां वाचक इति मुख्यपक्षेऽन्यप्रत्ययानां प्रयोजनं नास्ति। परं च औपगवशब्दो यदि पौत्रस्य वाचकस्तदा उपगोरपत्यं भवति उपगुपुत्रस्यापत्यं भवति। एवं च औपगवस्यापत्यमिति विग्रहे औपगवशब्दाद् इञपि स्यात्। तथा च इञ्घटितप्रयोगः स्यात्, औपगवशब्दप्रयोगश्च स्याद् इति इञादिघटितप्रकृतीनां प्रयोगो माभूदिति सारांशः।

**दाक्षिः** ( ई० ३८ )—दक्षस्यापत्यमिति विग्रहे 'अत इञ्' इति इञि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'दाक्षिः' इति। 'प्रदीयतां दाशरथाय मैथिली' इति त्वार्षमिति 'तस्यापत्यम्' इति सूत्रे निरूपितम्।

**बाहविः** ( ई० ५५ )—बाहुर्नाम कश्चिद् ऋषिः। तस्यापत्यमिति विग्रहे 'बाह्वादिभ्यश्च' इति सूत्रेण इञि पर्यन्यवल्लक्षणया आदिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'बाहविः' इति।

**औडुलोमिः** ( ई० ३४ )—उडुलोम्नोरपत्यमिति विग्रहे 'बाह्वादिभ्यश्च' इति इञि 'नस्तद्धिते' इति टिलोपे आदिवृद्धौ विभक्तिकार्ये 'औडुलोमिः' इति।

**सौधातकिः** ( ई० ३९ )—सुधातुरपत्यमिति विग्रहे 'सुधातुरकङ् च' इति सूत्रेण सुधातृशब्दात् षष्ठ्यन्तादपत्यर्थे इञ्प्रत्यये प्रकृतेरकङादेशे च कृते सुब्लुकि आदिवृद्धौ 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'सौधातकिः' इति।

**वैयासकिः** ( ई० ३४, ३६, ४३, ४९ )—वेदान् व्यस्यति शाखाभेदेन विभजतीति 'वेदव्यासः'। कर्मण्यण्, वृद्धिः। तत्र नामैकदेशग्रहणेन—व्यासस्यापत्य-

मिति विग्रहे 'व्यासवरुडनिषादचण्डालविम्बानां चेति वक्तव्यम्' इति वार्तिकेन इञ्प्रत्यये प्रकृतेरकङ्ङादेशे च कृते यकारात् यस्य आकारस्य पर्यन्यवल्लक्षणप्रवृत्तामादिवृद्धि बाधित्वा 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति सूत्रेण यकारात् पूर्वमैचागमे विभक्तिकार्ये 'वैयासकिः' इति। वकारात् पूर्वस्योदाहरणम्—'स्वश्वस्यापत्यं सौवश्वि'रिति।

(न च ऐचो वृद्धय ावादत्वादेव वृद्ध्यपवादसिद्धेस्तन्निषेधो व्यर्थ एवेति वाच्यम्, यत्र य्वाभ्यां परस्य प्रसक्तायाः वृद्धेः निषेधः तत्रैव ऐजागमाविति विषयनिर्देशार्थत्वेनावश्यकत्वात्। तेन 'दाध्यश्विः' इत्यादौ न। वृद्धिनिषेधोऽयं येननाप्राप्तिन्यायेन आदिवृद्धिरेवेत्यपि न विस्मर्तव्यम्। अत एव द्वे अशीती भृतो 'द्व्याशीतिकः' इत्यत्र 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिर्भवत्येवेति।)

**नाडायनः** (ई० ५१)—नडस्यापत्यमिति विग्रहे 'नडादिभ्यः फक्' इति फकि 'यस्येति च' इत्यकारलोपे फस्य आयन्नादेशे विभक्तिकार्ये 'नाडायनः' इति।

**गार्ग्यायणः** (ई० ४४)—गर्गस्य गोत्रं गार्ग्यः। गर्गादित्वाद् यञ्, आदिवृद्धिः। ततः गार्ग्यस्यापत्यं युवेत्यर्थे 'यञिञोश्च' इति यञन्तात् फकि 'यस्येति च' इत्यकारलोपे 'आयनेयीनीयियः—' इति फस्य आयन्नादेशे 'अट्कुप्वाङ्—' इति णत्वे विभक्तिकार्ये 'गार्ग्यायणः' इति। आयन्नादेशे कृते अनातीति पर्युदासात् 'आपत्यस्य च' इति यलोपो नेति।

**दाक्षायणः**—दक्षस्यापत्यमिति विग्रहः। साधनप्रकारस्तु पूर्ववत्।

**बैदिः** (ई० ३६, ४०)—बिदस्य अनन्तरापत्यं 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इति सूत्रेण अञोऽभावे अणि प्राप्ते तम्प्रबाध्य बाह्वादेराकृतिगणत्वात् 'बाह्वादिभ्यश्च' इति सूत्रेण इञि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'बैदिः' इति।

**दौहित्रः** (ई० ३५)—दुहितुरनन्तरापत्यमिति विग्रहे 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञि आदिवृद्धौ 'ऋतो ङि—' इति गुणे स्वादिकार्ये 'दौहित्रः' इति।

**गार्ग्यः** (ई० ५५)—गर्गस्य गोत्रापत्यमिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'गार्ग्यः' इति।

**वातण्ड्यः** ( ई० ३८, ४४ )—वतण्डस्य गोत्रापत्यं 'वातण्ड्यः' । वतण्डस्य गर्गादौ शिवादौ च पाठात् यञणोः प्राप्तयोः आङ्गिरसे यञेवेति 'वतण्डाच्च' इति सूत्रनियमेन आङ्गिरसेऽर्थे यञि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'वातण्ड्यः' इति । अनाङ्गिरसेऽपि 'गर्गादिभ्यो यञ्' इति यञि कृते तु 'वातण्ड्यः' इत्येव । 'शिवादिभ्योऽण्' इति अणि कृते तु 'वातण्डः' इति भवति ।

**आश्वायनः** ( ई० ५५ )—अश्वस्य गोत्रापत्यमिति विग्रहे 'अश्वादिभ्यः फञ्' इति फञि आदिवृद्धौ फस्य आयन्नादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आश्वायनः' इति ।

**वैश्वामित्रः** ( ई० ३२ )—विश्वामित्रस्यापत्यमिति विग्रहे 'ऋष्यन्धकवृष्णि-कुरुभ्यश्च' इति सूत्रेण अणि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**द्वैमातुरः** ( ई० ३४, ५०, ५५ )—द्वयोर्मात्रोरपत्यमिति विग्रहे 'तद्धितार्थः–' इति समासे सति 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' इति सूत्रेण अणि ऋकारस्य उत्त्वे रपरत्वे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ स्वादिकार्ये 'द्वैमातुरः' इति ।

**षाण्मातुरः** ( ई० ३६ )—षण्णां मातॄणामपत्यमिति विग्रहे 'तद्धितार्थः–' इति समासे सति 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' इति सूत्रेण अणि ऋकारस्य उत्त्वे रपरत्वे आदिवृद्धौ विभक्तिकार्ये 'षाण्मातुरः' इति ।

**माण्डुकेयः** ( ई० ४२, ४३ )—मण्डूको नाम ऋषिः, तस्यापत्यमिति विग्रहे 'ढक् च मण्डूकात्' इति सूत्रेण ढकि 'किति च' इत्यादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'माण्डुकेयः' इति । चकाराद् अण्प्रत्यये सति 'माण्डुकः' इति । 'पैलाया वा' इति सूत्राद् वाग्रहणानुवृत्त्या पक्षे 'अत इञ्' इति इञ्प्रत्यये कृते 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'माण्डुकिः' इति ।

**सापत्नः** ( ई० ४४ )—सपत्न्याः अपत्यमिति विग्रहे 'स्त्रीभ्यो ढक्' इति सूत्रं प्रबाध्य 'शिवादिभ्योऽण्' इत्यनेन अणि आदिवृद्धौ 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'सापत्नः' इति ।

**नैधेयः** ( ई० ३६, ५५ )—निधेरपत्यमिति विग्रहे 'इतश्चानिञः' इति सूत्रेण

ढकि 'किति च' इत्यादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'नैधेयः' इति। 'निधिरिति कश्चित् नामे'ति।

**प्रवाहणेयिः** ( ई० ४१, ४५ )—प्रवाहणस्यापत्यमिति विग्रहे 'शुभ्रादिभ्यश्च' इति ढकि एयादेशे, 'यस्येति च' इत्यल्लोपः। ततः प्रवाहणेयस्यापत्यमिति विग्रहे शुभ्रादिढगन्ताद् 'अत इञ्' इतीञ्प्रत्यये 'तत्प्रत्ययस्य च' इत्यनेन पूर्वपदस्य विभाषया उत्तरपदस्य नित्यं वृद्धौ विभक्तिकार्ये 'प्रावाहणेयिः' 'प्रवाहणेयिः' इति। न चात्र 'प्रवाहणस्य ढे' इति पूर्वसूत्रेणैव वृद्धिसिद्धत्वादिदं व्यर्थमिति वाच्यम्, ढप्रत्ययान्तात् बहिर्भूतो यो इञ् तन्निमित्ता 'तद्धितेष्वचामादेः' इति नित्या आदिवृद्धिः, ढप्रत्यये परे विकल्पेन बाधितुमशक्यत्वात्। नचोत्तरपदे आकारस्य वृद्धिविधानं व्यर्थं, तत्र आकारस्य स्वतः सिद्धत्वादिति वाच्यम्, 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य च' इति पुंवत्त्वप्रतिषेधार्थमावश्यकत्वात्।

**सौभागिनेयः** ( ई० ३७ )—सुभगायाः अपत्यमिति विग्रहे 'कल्याण्यादीनामिनङ्' इति सूत्रेण इनङि ढकि च कृते 'यस्येति च' इति सूत्रेण सुभगाशब्दस्याकारस्य ढकि प्रत्यये परे इनस्याऽकारस्य च पर्यायेण लोपे ढस्य एयादेशे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति सूत्रेण उभयपदादिवृद्धौ विभक्तिकार्ये 'सौभागिनेयः' इति।

**चटका** ( ई० ३१, ३८, ४६, ५२ )—'चटकाया ऐरक्' इति सूत्रे स्त्रीलिङ्गनिर्देशेन पुंल्लिङ्गचटकशब्दात् ऐरक्प्रत्ययो न स्यादित्याशङ्क्य 'चटकादिति वाच्यम्' इत्युक्तं वार्तिककृता। ततश्च चटकस्य चटकायाः वा स्त्र्यपत्यमिति विग्रहे लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि चटकाशब्दाद् ऐरक्प्रत्यये 'स्त्रियामपत्ये लुग् वक्तव्यः' इति तस्य लुकि 'यस्येति च' इत्याकारलोपे जातित्वात्प्राप्तं ङीषं बाधित्वा अजादित्वात् टापि विभक्तिकार्ये 'चटका' इति। पुंल्लिङ्गे तु 'चाटकैरः' इति भवति।

**गौधेरः** ( ई० ४९ )—गोधायाः अपत्यमिति विग्रहे 'गोधाया ढ्रक्' इति ढ्रकि 'किति च' इत्यादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इत्याकारलोपे 'लोपो व्योर्वलि' इति यलोपे विभक्तिकार्ये 'गौधेरः' इति। शुभ्रादित्वात् 'शुभ्रादिभ्यश्च' इत्यनेन पक्षे ढकि तु 'गौधेयः' इति। 'आरगुदीचाम्' इति सूत्रेण आरकि कृते तु 'गौधारः' इत्यपि भवति।

**जाडारः** ( ई० ५१ )—जडस्यापत्यमित्यर्थे 'आरगुदीचाम्' इति सूत्रेण आरकि सवर्णदीर्घे स्वादिकार्ये 'जाडारः' इति। न च गोधाया आरग्वा स्यादित्यर्थक-

'आरगुदीचाम्' इति सूत्रेणाऽत्र कथमारगिति वाच्यम्, रकासिद्धे आकारोच्चारणम् आकारान्तादन्यद् अदन्तं, तस्मादपि क्वचिद्विधानार्थमिति मूले उक्तत्वात् ।

**दासेरः** ( ई० ३९ )—दासस्यापत्यमित्यर्थे 'क्षुद्राभ्यो वा' इत्यनेन ढ्रकि पर्यन्यवल्लक्षणया आदिवृद्धौ ढस्य एय आदेशे 'लोपो व्योर्वलि' इति यलोपे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'दासेरः' इति । पक्षे ढकि 'दासेयः' इति ।

**मैत्रेयः** ( ई० ३३, ४१, ४३, ४५, ४८ )—मित्रयोरपत्यमित्यर्थे 'ऋष्यन्धक–' इत्यणि प्राप्ते तं प्रबाध्य 'गृष्ट्यादिभ्यश्च' इति सूत्रेण ढञि ढस्य एयादेशे मित्रयु एय इति स्थिते 'ओर्गुणः' इति गुणं बाधित्वा 'केकयमित्रयुप्रलयानां यादेरियः' इति इयादेशः प्राप्तः तमपि प्रबाध्य 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इति सूत्रेण निपातनात् युलोपे 'यस्येति च' इत्यकारलोपे आदिवृद्धौ विभक्तिकार्ये 'मैत्रेयः' इति ।

**कुत्साः** ( ई० ५३ )—कुत्सस्यापत्यानि पुमांसः इति विग्रहे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति सूत्रेण अणि 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' इत्यनेन तस्य लुकि लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावात् 'तद्धितेष्वचामादेः' इत्यादिवृद्धेरप्राप्तौ विभक्तिकार्ये प्रथमाबहुवचने 'कुत्साः' इति ।

**तिककितवाः** ( ई० ५२ )—तिकस्यापत्यं तैकायनः । कितवस्यापत्यं कैतवायनः । तैकायनश्च कैतवायनश्चेति उभयोर्द्वन्द्वे सति 'तिकादिभ्यः' इति प्राप्तफिञः 'तिककितवादिभ्यो द्वन्द्वे' इत्यनेन लुकि विभक्तिकार्ये 'तिककितवाः' इति बहुवचने रूपं सिद्धम् ।

**लमकाः** ( ई० ४० )—लमकस्यापत्यानि इति विग्रहे 'अश्वादिभ्यः फञ्' इति फञि 'उपकादिभ्योऽन्यतरस्यामद्वन्द्वे' इति फञो लुकि विभक्तिकार्ये 'लमकाः' इति बहुवचने रूपं सिद्धम् । लुगभावे फस्य आयन्नादेशे आदिवृद्धौ 'लामकायनाः' इति भवति ।

**राजन्यः** ( ई० ४३, ४७, ४९ )—राज्ञः अपत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणं बाधित्वा 'राजश्वशुराद्यत्' इति यत्प्रत्यये 'ये चाऽभावकर्मणोः' इति प्रकृतिभावाट्टिलोपाऽभावे तद्धितान्तत्वात् सौ रुत्वे विसर्गे 'राजन्यः' इति । क्षत्रियात् क्षत्रियायामुत्पन्न इत्यर्थः । क्षत्रियात् शूद्रादावुत्पन्ने तु 'राजनः' इति भवति ।

**राजनः** ( ई० ३८ )—'राजश्वशुराद्यत्' इति सूत्रे 'राज्ञो जातावेवेति वाच्यम्' इति वार्तिकविधानात् क्षत्रियात् शूद्रादावुत्पन्ने सति 'तस्यापत्यम्' इत्यणि 'नस्तद्धिते' इति टिलोपे प्राप्ते 'अन्' इति प्रकृतिभावे विभक्तिकार्ये 'राजनः' इति ।

**भाद्रसामः** ( ई० ५२ )—भद्रसाम्नोऽपत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणि आदिवृद्धौ 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'भाद्रसामः' इति । 'अन्' इति प्रकृतिभावस्तु न 'न मपूर्वोऽपत्येऽवर्मणः' इति निषेधात् ।

**हैतनामः** ( ई० ४२ )—हितनाम्नोऽपत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणि आदिवृद्धौ 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'हैतनामः' इति । 'अन्' इति प्रकृतिभावस्तु न 'वा हितनाम्न इति वाच्यम्' इति वार्तिकेन निषेधात् । विकल्पपक्षे तु 'हैतनाम्नः' इति भवति ।

**ब्राह्मं हवि** ( ई० ३१ )—'ब्राह्मो जातौ' इति सूत्रे 'ब्राह्मः' इत्येको योगः । 'इनण्यनपत्ये' इत्यतः अनपत्येऽणीत्यनुवर्तते । तदाह मूले 'ब्रह्म इति निपात्यतेऽनपत्येऽणि' इति । तथा च ब्रह्म देवताऽस्येति विग्रहे 'सास्य देवता' इत्यणि आदिवृद्धौ निपातनसामर्थ्यात् 'अन्' इति प्रकृतिभावनिवृत्तौ 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'ब्राह्मं हविः' इति । ब्रह्मणोऽपत्यमिति विग्रहे तु 'अपत्ये जातौ अणि ब्रह्मणः टिलोपो न स्यात्' इत्यर्थक 'जातौ' इति द्वितीययोगेन अणि आदिवृद्धौ विभक्तिकार्ये 'ब्राह्मणः' इति भवति ।

**अपूर्वपदात् सपूर्वाच्च कुलशब्दादिति** ( ई० ४३, ४४, ५० )—'पूर्वपदरहितात् कुलशब्दादपत्ये यड्ढकञौ वा स्तः इत्यर्थक 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति सूत्रेण कुलस्यापत्यमिति विग्रहे कुलशब्दात् यड्प्रत्यये 'यस्येति च' इत्यकारलोपे स्वादिकार्ये **'कुल्यः'** इति । ढकञ्प्रत्यये सति ढस्य एयादेशे 'यस्येति च' इत्यकारलोपे आदिवृद्धौ स्वादिकार्ये **'कौलेयकः'** इति । पक्षे 'कुलात् खः' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे स्वादिकार्ये **'कुलीनः'** इति ।

**बाहुकुलेयकः** ( ई० ४४ )—ईषदूनः कुलः बहुकुलः । 'विभाषा सुपो बहुच् पुरस्तात्' इति बहुच् । अत्र बहुच्प्रत्ययो न पदम् । तेन बहुकुलस्यापत्यमिति विग्रहे 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति सूत्रेण पूर्वपदरहितात् बहुकुलशब्दात्

यङ्प्रत्यये 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'बहुकुल्यः' इति। ढकञ्प्रत्यये सति ढस्य एयादेशे 'यस्येति च' इत्यकारलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ विभक्तिकार्ये 'बाहुकुलेयकः' इति। विकल्पपक्षे 'कुलात् खः' इति खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'बहुकुलीनः' इति च सिद्धं भवति।

**स्वस्रीयः** ( ई० ५२ )—स्वसुरस्यापत्यमिति विग्रहे 'स्वसुश्छः' इति सूत्रेण छप्रत्यये छस्य ईयादेशे ऋकारस्य यणि 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'स्वस्रीयः' इति।

**भ्रातृव्यः** ( ई० ४९ )—भ्रातुरपत्यमिति विग्रहे 'व्यन्सपत्ने' इति सूत्रेण व्यन्प्रत्यये विभक्तिकार्ये 'भ्रातृव्यः' इति। शत्रुरिति शेषः। 'ननु 'पाप्मना भ्रातृव्येण' इति कथम्? पाप्मनोऽपत्यत्वाभावात् इति चेन्न, तदुपचारात् सिद्ध-मिति मूले उक्तत्वात्।

**रैवतिकः** ( ई० ३४, ५३ )—रेवत्याः अपत्यमिति विग्रहे 'रेवत्यादिभ्यष्ठक्' इति ठकि 'ठस्येकः' इति ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये 'रैवतिकः' इति। इकादेशोऽदन्तः इति न विस्मर्तव्यम्।

**गार्गः** ( ई० ३६ )—गर्गस्य गोत्रापत्यं स्त्री गार्गी। 'गर्गादिभ्यो यञ्' इति यञ्। आदिवृद्धिः। 'यञश्च' इति ङीप्। 'यस्येति च' इत्यकारलोपः। 'हलस्त-द्धितस्य' इति यलोपः। ततः गार्ग्याः अपत्यं युवेति विग्रहे 'गोत्रस्त्रियाः कुत्सने ण च' इति सूत्रेण णप्रत्ययविवक्षिते सत्येव 'भस्याऽढे—' इति पुंवत्वेन ङीपो निवृत्तौ भूतपूर्वगत्या स्त्रीवाचकत्वमादाय गार्ग्यशब्दात् णप्रत्यये 'यस्येति च' इत्यकारलोपे 'आपत्यस्य च तद्धितेऽनाति' इति यलोपे स्वादिकार्ये 'गार्गः' इति। पक्षेऽनेनैव ठकि सति ठस्य इकादेशे अकारस्य यकारस्य च पूर्ववल्लोपे विभक्तिकार्ये 'गार्गिकः' इति। जाल्मः इति शेषः।

**कौरव्याः** ( ई० ३५ )—कुरुर्नाम कश्चिद् ब्राह्मणः। तस्यापत्यानि इति विग्रहे 'कुर्वादिभ्यो ण्यः' इति ण्यप्रत्यये आदिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये प्रथमाबहुवचने 'कौरव्याः' इति। ब्राह्मणाः इति शेषः।

**हारिषेणिः** ( ई० ५४ )—हरिषेणस्यापत्यमिति विग्रहे 'उदीचामिञ्' इति सूत्रेण इञ्प्रत्यये आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'हारिषेणिः' इति।

**वाकिनिः** ( ई० २९ )—वाकिनस्यापत्यमिति विग्रहे 'वाकिनादीनां कुक् च' इति सूत्रेण फिञि कुकागमे च कृते फस्य आयन्नादेशे दीर्घे यस्येति लोपे स्वादिकार्ये 'वाकिनकायनिः' इति। विकल्पपक्षे 'अत इञ्' इति इञि पर्यन्यवल्लक्षणया आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'वाकिनिः' इति।

**ग्लुचुकायनिः** ( ई० ३०, ३२ )—ग्लुचुकस्यापत्यमिति विग्रहे 'प्राचामवृद्धात् फिन् बहुलम्' इति सूत्रेण फिनप्रत्यये फस्य आयन्नादेशे सवर्णदीर्घे 'यस्येति च' इत्यकारलोपे 'विक्तिकार्ये 'ग्लुचुकायनिः' इति।

**मनोर्जाताविति** ( ई० ३७ )—मनुशब्दात् अञ् यत् एतौ प्रत्ययौ स्तः, तयोः परयोः मनुशब्दस्य षुगागमश्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामित्यर्थः। 'मानुषः–मनुष्यः'।इत्याद्युदाहरणम्।

**मनुष्यः** ( ई० ५०, ५१ )—मनुशब्दात् 'मनोर्जातावञ्यतौ षुक् च' इति सूत्रेण अञ्प्रत्यये तस्मिन् परे मनुशब्दस्य षुगागमे चकृते 'तद्धितेष्वचामादेः' इत्यादि वृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'मानुषः' इति। अनेनैव यत्प्रत्यये षुगागमे च कृते 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'मनुष्यः' इति। अत्र सूत्रे अपत्यग्रहणं तु न सम्बध्यते, अन्यथा बहुवचने 'मानुषाः' इत्यत्र 'यञञोश्च' इति सूत्रेण अञ्प्रत्ययस्य लुगापत्तेः।

**क्षत्रियसमानशब्दादिति**—तेषां राजा तद्राजः, तद्राजमाचष्टे तद्राजयति, तद्राजयतीति तद्राजः तद्देशस्य राज्ञो वाचकः इत्यन्वर्थतद्राज इति संज्ञासामर्थ्येन यो हि शब्दो देशस्य वाचकः क्षत्रियरूपार्थस्य च वाचकः तस्मात् शब्दात्, तस्य नाम षष्ठयन्तात् समर्थात् अपत्येऽर्थे यथाप्रत्ययाः भवन्ति, तथा राजन्यप्यर्थे प्रत्ययाः स्युः। एवञ्च पञ्चालानां राजा, पञ्चालस्यापत्यं वेत्यर्थद्वयेऽपि 'पाञ्चालः' इति रूपं सिद्ध्यति।

**पौरवः** ( ई० ३२, ५४ )—पुरूणां राजा पौरवः। पुरुशब्दात् तद्राजेत्यर्थे 'पुरोरण् वक्तव्यः' इति वार्तिकेन अणि आदिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'पौरवः' इति।

**आङ्गः** ( ई० ३० )—अङ्गादिदेशस्य राजेति विग्रहे 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इति सूत्रेण अणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च इत्याकारलोपे विभक्तिकार्ये 'आङ्गः' इति।

**आवन्त्यः** ( ई० ३३ )—अवन्तेरपत्यमिति विग्रहे 'वृद्धेत्कोशलाजादाञ्ञ्यङ्' इति सूत्रेण ञ्यङ्प्रत्यये आदिवृद्धौ 'यस्येति च' इतीकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । अवन्तिशब्दो देशे राजनि च वर्तते ।

**औदुम्बरिः** ( ई० ५३ )—उदुम्बरस्यापत्यमिति विग्रहे 'साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्' इति सूत्रेण इञ्प्रत्यये आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'औदुम्बरिः' इति ।

**कौरव्याः** ( ई० ३४, ३५ )—कुरोरपत्यानि कुरूणां राजानो वेति विग्रहे 'कुरुनादिभ्यो ण्यः' इति ण्यप्रत्यये आदिवृद्धौ 'ओर्गुणः' इति गुणे वान्तादेशे विभक्तिकार्ये 'कौरव्याः' इति। नन्वत्र ण्यप्रत्ययस्य तद्राजतया 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति कुतो न लुगिति चेन्न, कौरव्ये साधवः 'कौरव्याः' 'तत्र साधुः' इति यत्प्रत्ययेन समाधानस्य जागरूकत्वात् ।

**कम्बोजः** ( ई० ५२ )—कम्बोजस्यापत्यं राजा वेति विग्रहे 'जनपदशब्दात्क्षत्रियादञ्' इत्यञि तस्य तद्राजतया 'कम्बोजाल्लुक्' इति लुकि विभक्तिकार्ये 'कम्बोजः' इति ।

**यवनः** ( ई० ४० )—यवनदेशस्यापत्यं राजा वेति विग्रहे 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इति सूत्रेण अणि तस्य तद्राजतया 'कम्बोजादिभ्यः इति वक्तव्यम्' इति वार्तिकेन तस्य लुकि स्वादिकार्ये उक्तं रूपं सिद्धम् ।

**शूरसेनी** ( ई० ५४ )—शूरसेनस्यापत्यं स्त्री राज्ञी वेति विग्रहे 'जनपदशब्दात्क्षत्रियादञ्' इत्यञि तस्य तद्राजतया 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति तस्य लुकि 'अतश्च' इत्यनेन तद्राजस्य अकारस्य च लुकि प्रत्ययलक्षणमाश्रित्य अप्रत्ययान्तत्वेन जातित्वात् ङीषि स्वादिकार्ये 'शूरसेनी' इति । 'न लुमता' इति प्रत्ययलक्षणनिषेधस्तु न ङीष्विधेरङ्गकार्यत्वाभावात् ।

**कारूशी** ( ई० ५४ )—करूशस्यापत्यं स्त्री राज्ञी वेति विग्रहे 'जनपदात्क्षत्रियादञ्' इत्यञि तस्य तद्राजतया तस्य लुकि प्राप्ते 'न प्राच्यभर्गादियौधेयादिभ्यः' इति निषेधे आदिवृद्धौ जातित्वात् ङीषि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कारूशी' इति ।

**यौधेयी** ( ई० ४६ )—युधायाः अपत्यमिति विग्रहे अणम्प्रबाध्य 'द्व्यचः'

इति सूत्रेण ढकि ढस्य एयादेशे 'यस्येति च' इत्यनेनाकारस्य लोपे 'किति च' इत्यनेन आदिवृद्धौ 'यौधेय' इति। तस्मात् 'पर्श्वादियौधेयादिभ्योऽणञौ' इति सूत्रेण अञि 'अतश्च' इत्यनेन लुकि प्राप्ते 'न प्राच्यभर्गादियौधेयादिभ्यः' इत्यनेन निषेधे 'शार्ङ्गरवादिभ्यो ङीन्' इत्यनेन ङीनि 'यस्येति च' इत्यनेनाऽलोपे स्वादिकार्ये 'यौधेयी' इति। नन्वत्र 'अतश्च' इत्यञो लुकि कृतेऽपि ढगन्तत्वात् 'टिड्ढाणञ्-' इति ङीपि 'यौधेयी' इति सिद्धौ ङीन्विधानं किमर्थमिति चेन्न, ङीपि सति 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यात्। सिद्धान्ते तु अञन्तत्वात् ङीनि आद्युदात्तत्वमिति दिक्।

**शौक्रेयी** ( ई० ३७, ४१ )—शुक्राया अपत्यमित्यर्थे शुक्राशब्दात् तन्नामिकाणां बाधित्वा 'द्व्यचः' इति ढकि तस्य एयादेशे 'यस्येति च' इत्याकारलोपे 'किति च' इत्यादिवृद्धौ निष्पन्नात् शौक्रेयशब्दात् 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यञि तस्य 'अतश्च' इति प्राप्तस्य लुकः 'न प्राच्यभर्गादियौधेयादिभ्यः' इति प्रतिषेधे 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि 'यस्येति च' इत्यकारलोपे स्वादिकार्ये चोक्तं रूपं सिद्धम्।

**कौमुदगन्ध्या** ( ई० ३०, ३२, ३३, ३९, ४३, ४७, ४९ )— कुमुदगन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यः, उत्तरपदलोपश्च' इति समासे उत्तरपदस्य लोपे च कृते 'उपमानाच्च' इति सूत्रेण गन्धशब्दस्य इकारान्तादेशे विभक्तिकार्ये 'कुमुदगन्धिः' इति। ततः कुमुदगन्धेरपत्यं स्त्रीति विग्रहे 'तस्यापत्यम्' इत्यणि आदिवृद्धौ 'यस्येति च' इतीकारलोपे 'अणिञोरनार्षयोगुरूपोत्तमयोः ष्यङ् गोत्रे' इति सूत्रेण निर्दिश्यमानेति परिभाषया अणः ष्यङादेशे 'यङश्चाप्' इति चापि विभक्तिकार्ये 'कौमुदगन्ध्या' इति सिद्धम्।

इत्यपत्याधिकारः



# अथ रक्ताद्यर्थप्रकरणम्

**काषायम्** ( ई० ५५ )—कषायेण रक्तं वस्त्रं काषायम्। कषायो धातुविशेषः रञ्जनद्रव्यं, तेन रक्तं वर्णान्तरं प्राप्तमित्यर्थः। अत्र 'तेन रक्तं रागात्' इति सूत्रेण तृतीयान्ताद् अणि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ विभक्तिकार्ये 'काषायम्' इति।

**लाक्षिकः** ( ई० ३४ )—लाक्षया रक्तः लाक्षिकः। पट इति शेषः। अत्र 'लाक्षारोचनाट्ठक्' इति सूत्रेण ठकि ठस्य इकादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**पीतकम्** ( ई० ४१ )—पीतेन रक्तं वस्त्रं पीतकम्। अत्र 'पीतात्कन्' इति वार्तिकेन कनि विभक्तिकार्ये 'पीतकम्' इति।

**श्रावणी** ( ई० ३५ )—श्रवणेन युक्ता पौर्णमासीति विग्रहे 'नक्षत्रेण युक्तः कालः' इत्यनेन विहितस्य अणो यद्यपि 'विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः' इति निपातनाल्लुपा भाव्यं तथापि 'अबाचकान्यपि निपातनानि भवन्ति' इति परिभाषया लुगभावे आदिवृद्धौ अण्णन्तत्वात् 'टिड्ढाणञ्-' इति ङीपि विभक्तिकार्ये 'श्रावणी' इति सिद्धम्।

**तिष्यपुनर्वसवीयम्** ( ई० ५२ )—तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू, ताभ्यामहरिति विग्रहे 'द्वन्द्वाच्छः' इति छप्रत्यये छस्य ईयादेशे 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'तिष्यपुनर्वसवीयम्' इति। अहः इति शेषः।

**राधानुराधीया** ( ई० ४० )—राधेति विशाखानक्षत्रमुच्यते। राधा च अनुराधाश्च राधानुराधाः तद्युक्ता रात्रिरिति विग्रहे 'द्वन्द्वाच्छः' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्याकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये राधानुराधीया' इति। रात्रिरिति शेषः।

**कालेयम्** ( ई० ५३ )—कलिना दृष्टमिति विग्रहे 'कालेर्ढक्' इति ढकि टिलोपे ढस्य एयादेशे 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये कालेयम्' इति।

(क) **सिद्धे यस्येति** ( ई० ३०, ४३, ४५, ५२, ५३ )—अयम्भावः—वामशब्दात् 'वामदेवाड्ड्यड्ड्यौ' इत्यनेन य-यतोर्विधानेऽपि 'यस्येति च' इति लोपेनैव सिद्धे उक्तसूत्रे टिलोपार्थं डित्करणं व्यर्थमिति वाच्यम्, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्' इति परिभाषाद्वयज्ञापनेन चारितार्थ्यात्। तेन 'अवामदेव्यम्' इत्यत्र 'ययतोश्चाऽतदर्थे' इत्यत्र नञाश्रयेऽन्तोदात्ते कर्त्तव्ये नञोर्ग्रहणं माभूदेतदर्थं डित्करणमावश्यकमिति तदेव ध्वनयन्नाह—

'सिद्धे यस्येति लोपेन किमर्थं य-यतौ डितौ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे॥' इति।

(ख) **सिद्धे यस्येति**—अयम्भावः—'वामदेवाड्ड्यड्ड्यौ' इति सूत्रेण ययतोः प्रत्यययोः कृतयोः सतोः 'यस्येति च' इति अकारलोपे 'वामदेव्यम्' इति प्रयोगे सिद्धे प्रत्ययद्वये डकारोपादानं व्यर्थं सद् 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्', इति 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकग्रहणम्' इति च परिभाषाद्वयं ज्ञापयति। इत्थञ्च 'ययतोश्चातदर्थे' इति सूत्रे ययदिति प्रत्ययद्वयेन ड्यत्ड्येतिप्रत्ययद्वयस्य ग्रहणाभावेन 'अवामदेव्यम्' इति प्रयोगे उदात्तस्वराभावः सिद्ध्यतीति फलम्।

**वास्त्रः** ( ई० ४९ )—वस्त्रैः परिवृतो वास्त्रो रथः। अत्र तेन परिवृतो रथः इत्यर्थे 'परिवृतो रथः' इति सूत्रेण वस्त्रशब्दात् तृतीयान्तादणि सुब्लुकि आदिवृद्धौ विभक्तिकार्ये 'वास्त्रः' इति।

**द्वैपम्** ( ई० ५४ )—द्विपिनो विकारो द्वैपम्। द्विपि व्याघ्रः, तस्य विकारः चर्म इत्यर्थे 'प्राणिरजतादिभ्यः' इत्यञि आदिवृद्धौ विभक्तिकार्ये 'द्वैपम्' इति।

**वैयाघ्रः** ( ई० ४४, ४७ )—व्याघ्रस्य विकारः ( चर्म ) इत्यर्थे 'प्राणिरजतादिभ्योऽञ्' इत्यञि 'न य्वाभ्याम्—' इत्यैचागमे विभक्तिकार्ये 'वैयाघ्रम्' इति। तेन परिवृतो रथः इति विग्रहे 'द्वैपवैयाघ्रादञ्' इति अञि 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'वैयाघ्रो रथः' इति।

**कौमारापूर्ववचने** ( ई० ४१ )—अत्र सूत्रे 'कौमार' इत्यविभक्तिकः, लुप्तप्रथमाक इति यावत्। अपूर्वशब्दो भावप्रधानः, अत आह मूले—'अपूर्वत्वे निपातनमिदम्' इति। न पूर्वः पतिर्यस्याः सा 'अपूर्वपतिः' तां कुमारीमुपयतवान् पतिरित्यर्थे द्वितीयान्तात् कुमारीशब्दादण् स्यादित्यर्थे आह मूले—'अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः' इति। कुमारी अपूर्वपतिमुपपन्नेत्यर्थे प्रथमान्तात् कुमारीशब्दादञ् स्यादित्यर्थः, तदर्थमाह मूले-यद्वा 'अपूर्वपतिः कुमारी पतिमुत्पन्ना कौमारी भार्या' इति।

**शाराव ओदनः** ( ई० ४२ )—शरावे उद्धृतः ओदनः शाराव ओदनः। अत्र सप्तम्यन्तात् शरावशब्दात् 'तत्रोद्धृतममत्रेभ्यः' इत्यणि आदिवृद्धौ विभक्तिकार्ये 'शारावः' इति।

**अष्टाकपालः** (ई० ३१)—अष्टसु कपालेषु संस्कृतः इति विग्रहे 'तद्धितार्थ—' इति समासे सुब्लुकि 'संस्कृतं भक्षाः' इत्यणि 'द्विगोर्लुगनपत्ये' इत्यणो लुकि 'अष्टनः कपाले हविषि' इत्यष्टन्शब्दस्याकारान्तादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**औदश्वित्कः** ( ई० ५२ )—उदकेन श्वयति वर्द्धते इत्युदश्वित्। तत्र संस्कृतः औदश्वित्कः। अत्र 'उदश्वितोऽन्यतरस्याम्' इति सूत्रेण ठकि 'इसुसुक्तान्तात्कः' इति ठस्य कादेशे 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये 'औदश्वित्कः' इति। पक्षे 'औदश्वितः' इति।

**दौष्कः** ( ई० ४१ )—दौर्भ्यां चरतीति दौष्कः। अत्र 'चरति' इति सूत्रेण ठकि 'किति च' इत्यादिवृद्धौ 'दोष उपसङ्ख्यानम्' इति वार्तिकेन ठस्य कादेशे 'यस्येति च' इत्यलोपे विभक्त्यादिकार्ये 'दौष्कः' इति।

**अश्वत्थः** ( ई० ५३ )—अश्वत्थेन ( अश्विनीनक्षत्रेण ) युक्ता पौर्णमासी अश्वत्थः। 'नक्षत्रेण युक्तः कालः' इत्यणि 'लुबविशेषे' इति तस्य लुपि विभक्तिकार्ये 'अश्वत्थः' इति। ननु 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यां 'लुबविशेषे' इत्यस्याप्रवृत्तेरुक्तत्वात् कथमिह लुबिति चेन्न, निपातनात्-पौर्णमास्यामपि लुबित्युक्तत्वात्।

**अपोनप्त्रीयम्** ( ई० ३९, ४६ ) अपोनपाच्छब्दात् 'छ च' इति सूत्रेण छप्रत्यये निपातनात अपोनप्तृभावे च छस्य ईयादेशे यणि 'अपोनप्त्रीयम्' इति।

**शतरुद्रीयम्** ( ई० ३० )—शतं रुद्राः देवताः अस्येति विग्रहे 'शतरुद्राद्घश्च' इति वार्तिकेन चकारात् छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शतरुद्रीयम्' इति घपक्षे तु घस्य इयादेशे 'शतरुद्रियम्' इति भवति।

**महेन्द्रीयम्** ( ई० ५१ )—महेन्द्रो देवता अस्येति विग्रहे 'महेन्द्राद्घाणौ च' इति सूत्रेण घप्रत्यये घस्य इयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'महेन्द्रियम्' इति। हविरिति शेषः। अणि पक्षे आदिवृद्धौ 'यस्येति चे'त्यलोपे विभक्तिकार्ये 'माहेन्द्रम्' इति। चकारात् छप्रत्यये सति छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'महेन्द्रीयम्' इत्यपि।

**सौमी** ( ई० ३१ )—सोमो देवता अस्या ऋचः इति विग्रहे 'सोमाट्ट्यण्' इति सूत्रेण ट्यणि आदिवृद्धौ टित्वात् 'टिड्ढाणञ्–' इति ङीपि 'यस्येति च' इत्यकारलोपे 'हलस्तद्धितस्य' इति यलोपे विभक्तिकार्ये 'सौमी' इति। ऋगीति शेषः।

**वायव्यम्** ( ई० ५० )—वायुर्देवता यस्येति विग्रहे 'वाय्वृतुपित्रुषसो यत्' इति यति 'ओर्गुणः' इति गुणे 'वान्तो यि' इत्यवादेशे विभक्तिकार्ये 'वायव्यम्' इति।

**पित्र्यम्** ( ई० ४५ )—पितरः देवताः अस्येति विग्रहे 'वाय्वृतुपित्रुषसो यत्' इति यति 'रीङृतः' इति पितृशब्दस्य रीङादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'पित्र्यम्' इति ।

**उषस्यम्** ( ई० ३५ )—उषः देवता अस्येति विग्रहे 'वाय्वृतुपित्रुषसो यत्' इति यति विभक्तिकार्ये 'उषस्यम्' इति । सस्य रुत्वं तु न भत्वेन पदत्वाभावात् ।

**द्यावापृथिव्यम्** ( ई० ३४ )—द्यावा पृथिवी देवता अस्येति विग्रहे 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'द्यावापृथिवीयम्' इति । चकारात् यति प्रत्यये कृते 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'द्यावा-पृथिव्यम्' इति ।

**शुनाशीर्यम्** ( ई० ३८ )—शुनासीरो देवता अस्येति विग्रहे 'द्यावापृथिवी–' इति सूत्रेण चकारात् यत्प्रत्यये कृते 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शुनाशीर्यम्' इति । छप्रत्यये तु छस्य ईयादेशे अलोपे 'शुनासीरीयम्' इति ।

**सौमेन्द्रः** ( ई० ३० )—सोमश्च इन्द्रश्चेति सोमेन्द्रौ । तौ देवते अस्येति विग्रहे 'सास्य देवता' इत्यणि कृते 'देवताद्वन्द्वे च' इति प्राप्तायाः उभयपदवृद्धेः 'नेन्द्रस्य परस्य च' इति निषेधे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'सौमेन्द्रः' इति ।

**ऐन्द्रावरुणम्** ( ई० ५३ )—इन्द्रश्च वरुणश्चेति इन्द्रवरुणौ । 'देवताद्वन्द्वे च' इत्यनङ् । तौ देवते अस्येति विग्रहे 'सास्यदेवता' इत्यणि कृते 'देवताद्वन्द्वे च' इति प्राप्तायाः उभयपदवृद्धेः 'दीर्घाच्च वरुणस्य' इति निषेधे आदिवृद्धौ विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**पाकयज्ञिकः** ( ई० ५१ )—पाकयज्ञः औपासनाग्निसाध्यः पार्वणस्थाली-पाकादिः, स यस्मिन् काले वर्तते सः पाकयज्ञिकः । अत्र 'तदस्मिन् वर्तत इति नव-यज्ञादिभ्य उपसङ्ख्यानम्' इति वार्तिकेन ठञि ठस्य इकादेशे 'यस्येति चे'त्यकारलोपे आदिवृद्धौ विभक्तिकार्ये 'पाकयज्ञिकः' इति ।

**पौर्णमासी** ( ई० ४४ )—पूर्णो मासो अस्यां वर्तत इति पौर्णमासी तिथिः । अत्र 'पूर्णमासादण् वक्तव्यः' इति वार्तिकेन अणि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्त्रीत्वात् ङीपि विभक्तिकार्ये 'पौर्णमासी' इति ।

**यौवतम्** ( ई० ४५, ५१ )—युवतीनां समूहः इति विग्रहे शत्रन्तात् युवतीशब्दात् 'अनुदात्तादेरञ्' इत्यञि तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां सुब्लुकि 'भस्याढे' इति पुंवत्वेन ङीपो निवृत्तौ ञित्वादादिवृद्धौ स्वादिकार्ये 'यौवतम्' इति ।

**मानुष्यकम्** ( ई० ४२ )—मनुष्याणां समूहः इति विग्रहे 'गोत्रोक्षोष्ट्रोरभ्र–' इति सूत्रेण समूहार्थे वुञि तस्य अकादेशे 'आपत्यस्य च तद्धितेऽनाति इति प्राप्तस्य यलोपस्य 'प्रकृत्या के राजन्यमनुष्ययुवानः' इति निषेधे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'मानुष्यकम्' इति ।

**कैदारकम्** ( ई० ५१ )—केदाराणां समूहः इति विग्रहे 'केदाराद्यञ् च' इति सूत्रेण चकाराद् वुञि वोरकादेशे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे 'कैदारकम्' इति । यञि कृते तु आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्वादिकार्ये 'कैदार्यम्' इति ।

**कैदारिकम्** ( ई० ४०, ५२ )—केदाराणां समूहः इति विग्रहे 'ठञ्कवचिनश्च' इति सूत्रेण चकारात् केदारशब्दादपि ठञि ठस्य इकादेशे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कैदारिकम्' इति ।

**वाडव्यम्** ( ई० ५४ )—वाडवानां समूहः इत्यर्थे 'ब्राह्मणमाणववाडवाद्यत्' इति यति 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'वाडव्यम्' इति ।

**अहीनः**—अहःशब्देन सौत्यान्यानि विवक्षितानि । तेषां समूहः इति विग्रहे 'अह्नः खः क्रतौ' इति वार्तिकेन खप्रत्यये खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे विभक्तिकार्ये 'अहीनः' इति । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः ।

**आह्नः** ( ई० ३७ )—अह्नां समूहः इत्यर्थे क्रत्वप्रतीतेः 'अह्नः खः क्रतौ' इति वार्तिकस्याप्रवृत्त्या 'खण्डकादिभ्यश्च' इति अञि आदिवृद्धौ 'अह्नष्टखोरेव' इति नियमात् टिलोपाभावे 'अल्लोपोऽनः' इत्यल्लोपे विभक्तिकार्ये 'आह्नः' इति ।

**पार्श्वम्** ( ई० ४७ )—पर्शूनां समूहः इति विग्रहे 'पर्श्वा णस् वक्तव्यः' इति णसि आदिवृद्धौ 'सिति च' इति पदत्वात् 'ओर्गुणः' इति गुणादेशस्याप्रवृत्त्या यणादेशे विभक्तिकार्ये 'पार्श्वम्' इति ।

**धैनुकम्** (ई० ५०)—धेनूनां समूहः इति विग्रहे 'अचित्तहस्तिधेनोष्ठक्' इति ठकि ठस्य कादेशे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'धैनुकम्' इति ।

**कैश्यम्** ( ई० ४९, ५१ )—केशानां समूहः इत्यर्थे 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति सूत्रेण यञि आदिवृद्धौ 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'कैश्यम्' इति। पक्षे ठकि ठस्य इकादेशे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कैशिकम्' इति।

**वन्या** ( ई० ३०, ३३ )—वनानां समूहः इत्यर्थे 'पर्श्वादिभ्योः यः' इति यप्रत्यये 'यस्येति च' इति अकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'वन्या' इति। स्त्रीत्वं त्वत्र लोकादवसेयम्।

**वात्या** ( ई० ३९ )—वातानां समूहः इत्यर्थे 'पर्श्वादिभ्यो यः' इति यप्रत्यये 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'वात्या' इति। अत्रापि स्त्रीत्वं लोकादिति न विस्मर्तव्यम्।

**भारतः** ( ई० ४८ )—भरता योद्धारोऽस्य संग्रामस्येति भारतः। अत्र सङ्ग्रामे प्रयोजनयोद्धृभ्यः' इति सूत्रेण अणि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'भारतः' इति।

**श्यैनम्पाता** ( ई० ५४ )—श्येनपातोऽस्यां वर्तते इति श्यैनम्पाता मृगया। अत्र 'घञः सास्यां क्रियेति ञः' इति सूत्रेण ञप्रत्यये 'श्येनतिलस्य पाते ञे' इति मुमागमे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'श्यैनम्पाता' इति।

**औक्थिकः** ( ई० ३३ )—उक्थं सामविशेषः। तल्लक्षणपरो ग्रन्थविशेषो लक्षणया 'उक्थम्'। तदधीते वेद वेत्यर्थे 'क्रतूक्थादिसूत्रान्ताट्ठक्' इति ठकि ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'औक्थिकः' इति। मुख्यार्थात्तूक्थशब्दात् ठगणौ नेष्यते, अनभिधानादिति तत्त्वविदः।

**साङ्ग्रहसूत्रिकः** ( ई० ५४ )—सङ्ग्रहाख्यं सूत्रमधीते वेत्ति वेत्यर्थे 'क्रतूक्थादिसूत्रान्ताट्ठक्' इति ठकि ठस्य इकादेशे आदिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्। अत्र सूत्रे 'सूत्रान्तात्त्वकल्पादेरेवेष्यते' इति वार्तिकमुक्तं तेन कल्पादेस्तु 'काल्पसूत्रः' इत्येव भवति।

**वायसविद्यिकः** ( ई० ४४ )—वायसविद्यामधीते इति विग्रहे 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्' इति वार्तिकेन ठकि ठस्य इकादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**त्रैविद्यः** ( ई० ३० )—त्रिविधा विद्या त्रिविद्या, तामधीते वेद वेति त्रैविद्यः। शाकपार्थिवादित्वाद् विधाशब्दस्य लोपः। अत्र 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्' इति वार्तिकेन ठकि प्राप्ते 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' इति वार्तिकेन तन्निषेधे 'तदधीते तद्वेद' इत्यणि आदिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'त्रैविद्यः' इति।

**वासवदत्ता** ( ई० ४६ )—वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। अत्र 'अधिकृत्यकृते ग्रन्थे' इत्यर्थे 'वृद्धाच्छः' इति विहितस्य छप्रत्ययस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुपि स्त्रीत्वाट्टापि विभक्तिकार्ये 'वासवदत्ता' इति।

**वासवदत्तिकः** ( ई० ३६ )—वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। 'अधिकृत्य कृते ग्रन्थे' इत्यर्थे 'वृद्धाच्छः' इति विहितस्य छस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप्। ततो वासवदत्तामधीते वेद वेति विग्रहे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति वार्तिकेन ठकि ठस्य इकादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'वासवदत्तिकः' इति।

**सर्ववेदः** ( ई० ५२ )—सर्ववेदानधीते वेद वेत्यर्थे 'तदधीते तद्वेद' इत्यणि 'सर्वादेः सादेश्च लुग्वक्तव्यः' इति वार्तिकेन तस्य लुकि विभक्तिकार्ये 'सर्ववेदः' इति।

**सवार्तिकः** ( ई० ४१ )—सवार्तिकं सूत्रमधीते वेत्ति वेत्यर्थे 'तदधीते तद्वेद' इत्यणि 'सर्वादेः सादेश्च लुग्वक्तव्यः' इति वार्तिकेन तस्य लुकि विभक्तिकार्ये 'सवार्तिकः' इति।

**द्वितन्त्रः** ( ई० ४२ )—द्वे तन्त्रे अधीते वेत्ति वेत्यर्थे 'तदधीते तद्वेद' इत्यणि तस्य तद्धितार्थे द्विगुनिमित्तत्वात् 'द्विगोर्लुगनपत्ये' इति लुकि विभक्तिकार्ये 'द्वितन्त्रः' इति।

**शतपथिकः** ( ई० ५४ )—शतपथं नाम वाजसनेयिब्राह्मणं, तदधीते वेत्ति वेत्यर्थे 'इकन्पदोत्तरपदाच्छतषष्टेः षिकन् पथः' इति वार्तिकेन षिकन्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शतपथिकः' इति।

**पाणिनिः** ( ई० ४१ )—पणनं पणः स्तुतिरित्यर्थः। 'घञर्थे कविधानम्' इति कः। ततः पणोऽस्यास्तीति 'पणी' 'अत इनठनौ' इति मत्वर्थे इनिः। तस्य पणिनः गोत्रापत्यमिति विग्रहे 'तस्यापत्यम्' इत्यणि आदिवृद्धौ इलोपे 'पाणिनः' इति। अत्र

हि अणः अपत्यत्वात्तस्मिन्परे 'इनण्यनपत्ये' इति प्रकृतिभावाट्टिलोपे प्राप्ते 'गाथि-विदथिकेशिगणिपणिनश्च' इति सूत्रेण प्रकृतिभावे पाणिनशब्दात् पुनः युवापत्यार्थे विवक्षिते 'अत इञ्' इत्यनेन इञि अल्लोपे स्वादिकार्ये 'पाणिनिः' इति ।

**पाणिनीयः** (ई० ३३, ४३)—पाणिनीयमधीते तद्वेद वेत्यर्थे पाणिनीयशब्दात् 'तदधीते तद्वेद' इत्यणि 'प्रोक्ताल्लुक्' इति लुकि सुबुत्पत्तौ 'पाणिनीयः' इति निष्पद्यते ।

नन्वत्र असत्यपि अध्येतृवेदितृप्रत्ययस्याणो लुकि पाणिनीयशब्दः सिध्यत्येवेति किमर्थं लुग्विधीयत इति चेत् सत्यम्, अणो लुगभावे क्रियमाणन्तत्वात् 'टिड्ढाणञ्' इत्यादिना ङीप् स्यात्, स्वरे च भेदः स्यादिति दिक् ।

( पाणिनेरपत्यमित्यर्थे पणिन्शब्दात् 'तस्यापत्यम्' इत्यौत्सर्गिके अणि युवार्थे तु 'अत इञ' इति सूत्रेण इञि प्रत्यये आदिवृद्धौ निष्पन्नात् पाणिनिशब्दात् 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इति सूत्रेण इञोः लुक् न भवति सूत्रे आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । औत्सर्गिकस्य हि वस्तु-गत्या ऋषिवाचित्वेपि प्रतिपदोक्तत्वं नास्ति । ततः पाणिना प्रोक्तमित्यर्थे 'तेन प्रोक्तम्' इत्यणं बाधित्वा 'वृद्धाच्छः' इति छप्रत्यये तस्य ईयादेशे पाणिनीयशब्दो निष्पन्नः । नचात्र पाणिनिशब्दात्तद्धिते विवक्षिते इञो लुकि सत्यपि प्रत्ययलक्ष-णेन इञन्तत्वमाश्रित्य छाऽपवादोऽण् स्यादिति वाच्यम् , पाणिनिशब्दे इञो युवार्थ-कत्वात् युवसंज्ञया गोत्रसंज्ञाया बाधात् । 'इञश्च' इति सूत्रे च गोत्रार्थकस्येञोग्रहणाच्च ) ।

**कठाः** ( ई० ४७, ५३ )—कठेन प्रोक्तमधीयते इत्यर्थे 'तेन प्रोक्तम्' इत्यणं प्रबाध्य 'वैशम्पायनान्तेवासिभ्यश्च' इति णिनिप्रत्यये 'कठचरकाल्लुक्' इति तस्य लुकि विभक्तिकार्ये 'कठः' इति । तस्मात् लुप्तप्रोक्तप्रत्ययकात् कठशब्दात् 'तदधीते तद्वेद' इत्यणि 'प्रोक्ताल्लुक्' इति तस्य लुकि विभक्तिकार्ये 'कठाः' इति प्रथमाबहु-वचने रूपम् सिद्धम् । तथा च कठेन प्रोक्तमधीयते 'कठाः' इत्येवं कठशब्दस्य लुप्तप्रोक्तप्रत्ययान्तस्य अध्येत्रणा सहैव प्रयोगार्हता, न तु तेन विना केवलप्रोक्त-प्रत्ययान्तस्येति ।

इति रक्ताद्यर्थकः ।



# अथ चातुरर्थिकाः

**कौशाम्बी** ( ई० ३४ )—कुशाम्बेन निर्वृत्ता इत्यर्थे 'तेन प्रोक्तम्' इत्यनेन कुशाम्बशब्दाद् अणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'टिड्ढाणञ्–' इति स्त्रीत्व-विवक्षायां ङीपि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कौशाम्बी' इति। नगरी इति शेषः।

**काक्षतवम्** ( ई० ५४ )—कक्षतुरस्मिन्नस्तीति विग्रहे 'ओरञ्' इत्यञि आदिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'काक्षतवम्' इति।

**इक्षुमती** ( ई० ५२, ५३ )—इक्षुरस्मिन्नस्तीति विग्रहे 'ओरञ्' इत्यञं प्रबाध्य नदीवाचकात् इक्षुशब्दात् 'नद्यां मतुप्' इति मतुपि उगित्त्वात् ङीपि विभक्तिकार्ये 'इक्षुमती' इति।

**दैर्घवरत्रः** ( ई० ३६ )—दीर्घवरत्रेण निर्वृत्तः कूपः इति विग्रहे 'बह्वचः कूपेषु' इति सूत्रेण अञि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**साङ्कलम्** ( ई० ५३ )—सङ्कलेन निर्वृत्तमिति विग्रहे 'सङ्कलादिभ्यश्च' इत्यञि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'साङ्कलम्' इति।

**त्रैशङ्कवम्** ( ई० ४० )—त्रिशङ्कुना निर्वृत्तः कूप इत्यर्थः। 'कोपधाच्च' इत्यणि आदिवृद्धौ 'ओर्गुणः' इति गुणे अवादेशे विभक्तिकार्ये 'त्रैशङ्कवम्' इति।

**वुञ्छणिति** ( ई० ४२ )—अस्मिन् सूत्रे अरीहण, कृशाश्व, ऋष्य, कुमुद, काश, तृण, प्रेक्ष, अश्मन्, सखि, सङ्काश, बल, पक्ष, कर्ण, सुतङ्गम, प्रगदिन्, वराह, कुमुद–एतानि प्रकृतिस्वरूपाणि। वुञ्, छण्, क, ठच्, इल, स, इनि, र, ढञ्, ण्य, य, फक्, फिक्, इञ्, ञ्य, कक्, ठक्, एतानि प्रत्ययस्वरूपाणि सन्ति।

**आरीहणकम्** ( ई० ४४ )—अरीहरेण निर्वृत्तमिति विग्रहे 'वुञ्छण्कठ–' इति सूत्रेण वुञि वोरकादेशे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आरीहणकम्' इति।

**काशिलः** ( ई० ३७ )—काशेन निर्वृत्तमिति विग्रहे 'वुञ्छण्कठ–' इति सूत्रेण काशशब्दाद् इलप्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'काशिलः' इति।

**वङ्गाः** ( ई० ५४ )—वङ्गानां निवासो जनपदः वङ्गाः। अत्र 'तस्य निवासः' इति विहितस्याणः 'जनपदे लुप्' इति लुपि 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिवल्लिङ्गे वचने च विहिते विभक्तिकार्ये 'वङ्गाः' इति सिद्धम्।

**योगप्रमाणे च तदभावेऽदर्शनं स्यात्** ( ई० ४१ )—पञ्चालाऽङ्गवङ्गादि-शब्देषु योगस्य = अवयवार्थस्य, प्रमापकत्वे सति तदभावे = पञ्चालाङ्गादिक्षत्रिय-सम्बन्धाभावे, सम्प्रति शूद्रादिराजके जनपदे पञ्चालादिशब्दो न प्रयुज्येत, प्रयुज्यते च यतः, अतः पञ्चालादिशब्दाः जनपदविशेषेषु केवलरूढा इति युक्तमित्यर्थः। तदे-तदाह मूले-'यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत' इति।

**गोदौ रमणीयौ** ( ई० ४६ )—गोदयोर्निवासो जनपदः इति विग्रहे 'तस्य निवासः' इत्यणि 'जनपदे लुप्' इति तस्य लुपि 'विशेषणानां चाऽजातेः' इति प्रत्ययार्थजनपदस्य तद्विशेषणस्यापि प्रकृतिवद् द्विवचने उक्तं रूपं सिद्धम्।

**हरीतक्यादिषु व्यक्तिः** ( ई० ४१ )—हरीतक्यादिषु लुपि लिङ्गं प्रकृति-वद्भवति न तु वचनमित्यर्थः। तेन हरीतक्याः फलानि 'हरीतक्यः' इत्यत्र प्रत्यया-र्थेषु फलेषु प्रकृतिवत् स्त्रीलिङ्गमेव भवति नत्वेकवचनमिति विवेकः।

**हरीतक्यः** ( ई० ४५ )—हरीतक्याः फलानि 'हरीतक्यः'। जातिङीषन्तः प्रत्ययस्वरेणाऽन्तोदात्तो हरीतकीशब्दः। तस्मात् हरीतकीशब्दात् 'अनुदात्तादेरञ्' इति सूत्रेण अञि तस्य 'हरितक्यादिभ्यश्च' इत्यनेन लुपि स्वादिकार्ये 'हरीतक्यः' बहुवचने रूपं सिद्धम्। अत्र 'लुपि युक्तवद्व्यक्तिवचने' इति प्राप्ते 'हरीतक्यादिषु व्यक्तिः' इति वार्तिकेन युक्तिवत्त्वात्स्त्रीत्वे विशेष्यानुरोधाद्बहुवचनं बोध्यम्।

**शर्कराशब्दस्येति** ( ई० ३२, ३३, ३६, ३७, ४३, ५१, ५३ )—चातुर-र्थिकप्रत्ययान्तस्य शर्कराशब्दस्य प्रथमैकवचने षट् रूपाणि भवन्ति। तथाहि-शर्करा-शब्दादौत्सर्गिके अणि तस्य 'शर्कराया वा' इत्यनेन लुपि 'लुपि युक्तवद्वचने' इत्यनेन युक्तवद्भावे च कृते 'शर्करा' इति प्रथमं रूपम्। लुपः पाक्षिकत्वात्तदभावे 'शार्करम्' इति द्वितीयं रूपम्। 'ठक्छौ च' इत्यनेन ठकि अनुबन्धलोपे 'किति च' इत्यनेन आदि वृद्धौ 'शार्करिकम्' इति तृतीयं रूपम्। तेनैव सूत्रेण छप्रत्यये सति 'शर्क-रीयम् इति चतुर्थं रूपम्। शर्कराशब्दस्य कुमुदादिषु पाठकरणात् ठचि 'शर्क-रिकम्' इति पञ्चमं रूपम्। वाराहादिषु च पाठात् कक्प्रत्यये कृते 'शार्करकम्' इति षष्ठं च रूपं सिद्धं भवति।

**मधुमान्** ( ई० ५० )—मधूनां निवासः इति विग्रहे 'मध्वादिभ्यश्च' इति मधुशब्दात् मतुपि तद्धितान्तत्वात् सौ उगित्वान्नुमि उपधादीर्घे संयोगान्तलोपे सुलोपे 'मधुमान्' इति ।

**कुमुद्वान्** ( ई० ३४ )—कुमुदाः सन्ति अस्मिन्निति विग्रहे कुमुदशब्दात् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुपि डित्वाट्टिलोपे 'झयः' इति मकारस्य वकारे तद्धितान्तत्वात् सौ उगित्वान्नुमि संयोगान्तलोपे उपधादीर्घे हल्ङ्यादिलोपे 'कुमुद्वान्' इति ।

**वेतस्वान्** ( ई० ३९ )—वेतसाः सन्ति अस्मिन्निति विग्रहे वेतस् शब्दात् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुपि डित्वाट्टिलोपे 'मादुपधायाश्च' इति मस्य वत्वे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां सौ उगित्वान्नुमि संयोगान्तलोपे उपधादीर्घे हल्ङ्यादिलोपे 'वेतस्वान्' इति ।

( अत्र सस्य रुत्वं तु न अल्लोपस्य स्थानिवत्वात् । 'न पदान्त–' इति निषेधस्तु न, तत्र 'पदे अन्तः' इति विगृह्य–पदे परतः चरमावयवे कर्तव्ये परपदस्थाजादेशस्यैव तन्निषेधप्रवृत्तेर्भाष्याभ्युपगमात् । 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधोऽपि न, 'पदे अन्तः' इति विगृह्य, तत्र स्थानिवत्वनिषेधव्यावृत्तिसाधनपरभाष्यप्रामाण्येन पदचरमावयवकार्यविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणादिति दिक् । )

**महिष्मान्** ( ई० ४४ )—महिषाः अस्मिन् ( देशे ) सन्ति इति विग्रहे 'महिषशब्दात् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुपि डित्वाट्टिलोपे तद्धितान्तत्वात् सौ उगित्वान्नुमि संयोगान्तलोपे उपधादीर्घे हल्ङ्यादिलोपे 'महिष्मान्' इति । महिष्मान्नाम देशः । अत्राल्लोपस्य स्थानिवत्वात् षस्य जश्त्वन्नेति ।

**शाद्वलः** ( ई० ५४ )—शादाः अस्मिन् सन्तीति विग्रहे 'नडशादाड्ड्वलच्' इति ड्वलचि डित्वाट्टिलोपे विभक्तिकार्ये 'शाद्वलः' इति । 'शादो जम्बालघासयोः' इत्यमरः ।

**तक्षकीयः** ( ई० २८ )—तक्षाणः अस्मिन् सन्तीति विग्रहे 'तक्षन्नलोपश्च' इति गणसूत्रेण तक्षन् शब्दात् छप्रत्यये कुकि नलोपे च कृते 'आयनेयीनीयियः–' इति सूत्रेण छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'तक्षकीयः' इति ।

**बिल्वकादिभ्यः** ( ई० ३६ )—'नडाद्यन्तर्गता बिल्वकादयः, तेभ्यश्छस्य लुक् तद्धिते परे' इत्यर्थः। बैल्वकाः, वैत्रकाः इत्याद्युदाहरणानि।

**बिल्वकीया** ( ई० ५३ )—बिल्वाः यस्यां सन्तीति विग्रहे 'नडादीनां कुक् च' इति छप्रत्यये कुकागमे च कृते छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'बिल्वकीया' इति।

**बैल्वकाः** ( ई० ३१ )—बिल्वाः यस्यां सन्ति सा 'बिल्वकीया'। 'नडादीनां कुक् च' इति छप्रत्यये कुगागमे कृते छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'बिल्वकीया' इति। तस्यां भवाः इति विग्रहे भवार्थे अणि आदिवृद्धौ 'बिल्वकादिभ्यश्छस्य लुक्' इति छप्रत्ययमात्रस्य लुकि 'यस्येति च' इत्यकार लोपे विभक्तिकार्ये 'बैल्वकाः' इति प्रथमाबहुवचने रूपं सिद्धम्।

**'बिल्वकादिभ्यश्छस्य लुक्**—अत्र सूत्रे छस्य किमिति चेत्? 'बैल्वकाः' इत्यत्र छमात्रस्य लुग् यथा स्यात् कुको निवृत्तिर्माभूदिति। अन्यथा 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषया कुगपि निवर्तेत। एवं हि सूत्रे लुग्ग्रहणं सर्वलोपार्थमित्यपि न विस्मर्तव्यम्। अन्यथा 'ढे लोपोऽकद्र्वाः' इत्यतः लोप इत्यनुवर्त्य लोपविधाने सति ईयादेशस्य यमात्रस्य लोपापत्तेः।

**वैत्रकाः** ( ई० ४२, ४५ )—वेत्राणि अस्यां सन्तीत्यर्थे 'नडादीनां कुक् च' इति छप्रत्यये कुगागमे च कृते छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'वेत्रकीया' इति। तस्यां भवाः इति विग्रहे भवार्थे अणि आदिवृद्धौ 'बिल्वकादिभ्यश्छस्य लुक्' इति छप्रत्ययमात्रस्य लुकि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'वैत्रकाः' इति प्रथमाबहुवचने रूपं सिद्धम्।

इति चातुरर्थिकाः

इति मिथिलामहीमण्डलान्तर्गत'तरौनी'ग्रामवासिपण्डितश्रीमदनन्तलालझाशर्मात्मजश्रीरामचन्द्रझाव्याकरणाचार्यविरचिता

...रकादिचातुरर्थिकान्तप्रश्नोत्तरी समाप्ता।

# प्रश्नपत्राणि



## कारकादि-चातुरर्थिकान्तभागे प्रश्नाः

### १९३५

१—नाययति वाहयति वा भारं भृत्येन अतिदेवान् कृष्णः, पशुना रुद्रं यजते, ज्ञानेन निमित्तेन हरिः सेव्यः, प्रसित उत्सुको वा हरिणा हरौ वा। एषु विभक्तीः सूत्रोपन्यासेन साधय। १०

२—उपशरदम्, दध्योदनः, पुराणमीमांसकाः, दत्ताभार्यः, शुकबकम् एषां विग्रहवाक्यानि प्रदर्श्य सिद्धिप्रकारं लिख। १०

३—हस्तिवर्चसम्, शुनिबन्धः, रुरव इमे, शिरीषवनम्, कदन्नम्, एषु विशेषकार्याणि लिख। १०

४—पान्नागारिः, दौहित्रः, कौरव्याः, श्रावणी, उषस्यम्, एषु के प्रत्ययाः केन केन सूत्रेण कुत्र चाऽर्थे इति सविशेषं निरूपय। १०

५—(क) अकृतव्यूहपरिभाषया साबुत्थितिर्मा भूत्।

(ख) उपसर्जने तु तदादिनियमान्नेह।

(ग) तमप्ग्रहणं किम् गङ्गायां घोषः।

अत्र द्वयोराशयं वर्णय। १०

### १९३६

१—उपवसति वैकुण्ठम्, वने उपवसति, अतिदेवान् कृष्णः, अक्षैरक्षान्वा दीव्यति, पत्ये शेते, दक्षिणा ग्रामात्, अधीती व्याकरणे, एषु दर्शितविभक्तीर्वचनैः संसाध्य दूरार्थकशब्दयोगे कति विभक्तयो जायन्ते काश्च तत्रोपपत्तयः इत्यभिधीयताम्। १०

२—तमब्ग्रहणं किम् गङ्गायां घोष इति पङ्क्तिका व्याख्यायताम्। १०

३—षण्णां मातॄणामपत्यम्, पञ्च गावो धनं यस्य नावोऽर्धम्, पञ्चानां तक्ष्णां समाहारः, कुक्कुट्या अण्डम्, इति दर्शितविग्रहनिष्पन्नरूपाणि वचनैः साध्यन्ताम्। १०

४—शतधन्वा, कुड्मलाग्रदन्, दन्तोष्ठम्, उदमेघः, अन्यदुत्सुकः, द्विगुणाकर्णः एतान् वचनैर्व्युत्पाद्य 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' कारनाम्नि च प्राचां हलादौ, एतयोर्योगयोः फलं साधूपपादनीयम्। १०

५—तत्र भवान् गार्ग्यायणः, वैयासकिः, बैदिः, नैधेयः, गार्गो गार्गिको वा जाल्मः, वासवदत्तिकः, दैर्घवरत्रः, एतान् साधयित्वा 'बिल्वकादिभ्यश्छस्य लुक्' 'नद्यां मतुप्' 'शर्कराया वा' एतेषामुदाहरणानि दर्शयत । १०

## १६३७

१—द्व्यहीनः क्रतुः, एकान्नविंशतिः, रसिकाभार्यः, गोमहिषम्, शीतोष्णम्, स्थण्डिलशायी, कारीषगन्ध्या, अन्यदुत्सुकः, द्विगुणाकर्णः, क्षीरपाणम्, पितुःस्वसा, ऊर्ध्वष्ठीवम् । एषां केषुचिदष्टसु प्रयोगेषु ससूत्रनिर्देशं विशेषकार्याणि प्रदर्श्यन्ताम् । १२

२—प्रातिपदिकार्थलिङ्गेत्यादिसूत्रे परिमाणग्रहणप्रयोजनं स्फुटं विव्रियताम् । ७

अथवा

'कर्तृकर्मणोः कृतिः' इति सूत्रे कृतिग्रहणं सम्यक् प्रतिक्षिप्य तत्प्रयोजनं साधुः समर्थ्यताम् ।

३—छात्रं पाठशालां नयति, समेनैति, यागाय याति, आमुक्तेः संसारः, चौरस्य रोगस्य रुजा । ब्राह्मणा इतरेभ्यो बुद्धिमत्तराः, एषु तत्र तत्र तत्तद्विभक्तिविधायकानि सूत्राणि समन्वयमुपन्यसनीयानि । ८

४—अनुवनमशनिर्गतः, परोक्षा क्रिया, बाणविद्धः, नररत्नम्, विस्थः, सगर्भ्यः, एषु आद्या अन्त्या वा चत्वारः प्रयोगाः लौकिकालौकिकौ विग्रहौ प्रदर्श्य, समासनामनिर्देशपुरस्सरं सूत्रोपन्यासपूर्वकं साधनीयाः । ८

५—तद्धितार्थोत्तरपदसमाहारे च । मनोर्जातावञ्यतौ षुक् च । इति सूत्रे सोदाहरणे व्याख्यायेताम् । ६

अथवा

अधोनिर्दिष्टानां वाक्यानामर्थे वृत्तिघटितानि वाक्यानि प्रयुज्यन्ताम् । तत्र च सप्रमाणं समासनाम तद्धितप्रत्ययो वा निर्दिश्यताम् । ३३

( अ ) वयं काश्यां निवसामः ।

( आ ) यस्याक्षिणी पिङ्गे स इहानीयताम् ।

( इ ) स च देवदत्तश्च गमिष्यतः ।

( ई ) आवयोः क्रीडायां चपेटाप्रहरणमभूत् ।

६—गार्गीयाः, सौभागिनेयः, शौक्रेयी, आढ्यः, काशिलः, शार्करम्, एषु यथेच्छं चत्वारः प्रयोगाः प्रत्ययार्थनिर्देशपुरस्सरं ससूत्रोपन्यासं साधनीयाः । एष्वर्थेषु विकल्पितान्यपि रूपाणि सन्ति चेत् तान्यपि लेख्यानि । १०

## १९३८

१—वृक्षं वृक्षं प्रति सिञ्चति। हरयेऽसूयति। ग्रामाय गच्छति। मातुर्निलीयते। परिहरेः संसारः। चौरस्य क्राथनम्। एतेषामर्थं विधायकानि वचनानि च प्रदर्श्य 'क्लृपि सम्पद्यमाने च' 'क्त्येन्विषयस्य कर्मण्युपसंख्यानमि'त्युभे वार्त्तिके सोदाहरणे व्याख्येये। ३ १०

२—समुद्रम्। प्राप्तजीविका। द्व्यहप्रियः। सौवश्वभार्यः। खरणसः। कुरुकुरुक्षेत्रम्। एतान् विग्रहप्रदर्शनपूर्वकं संसाध्य—'अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्' इति वार्त्तिकस्य 'पूर्वस्यैवेदम्, अस्त्रैषाजाज्ञाद्वेति लिङ्गादि'ति ग्रन्थस्य च तात्पर्यं सप्रयोजनं प्रतिपाद्यताम्। १०

३—सुचतुरः। सन्तमसम्। मातुःष्वसा। अग्निमिन्धः। माषकुम्भवापेन। एषु विग्रहं प्रदर्श्य विशेषकार्याणि प्रदर्श्यताम्। १०

४—वातण्डयः। चटका। राजनः। शुनासीर्यम्। तत्रकीयः—एतेषां सविग्रहं साधुत्वं वचनैः प्रतिपादनीयम्। १०

५—'एकोगोत्रे' इति सूत्रं सफलं व्याख्यायताम्। १०

## १९३९

१—कुरून् स्वपीति। उपहरिं सुरा। विषमेणैति। क्रूरमभिक्रुध्यति। ग्रामाय गच्छति। तिलेभ्यः प्रतियच्छति माषान्। सर्पिषो नाथम्। सर्वस्मिन्नात्मास्ति—एषां पञ्चसु रूपेषु विभक्त्यर्थञ्च सूत्रोपन्यासेन लिखत। १०

२—अपदिशम्। साग्नि। प्रत्यग्नि। उपनदम्। वातच्छेद्यम्—एतान् विग्रहप्रदर्शनपुरस्सरं संसाध्य 'भवतः शायिका' इत्यत्र समासः कुतो नेति प्रतिपादय। ८

३—द्व्यहजातः। द्व्यङ्गुला। तत्त्वायस्कारम्। पितरौ। प्राध्वः—एषां विग्रहवाक्यानि प्रदर्श्य सूत्रोपन्यासेन साधुत्वं चोपपाद्य 'तत्र तेनेदमिति सरूपे' इति सूत्रार्थः सोदाहरणमुपवर्णनीयः। ८

४—अञ्जसाकृतम्। रोहिणीषेणः। परीपाकः। परिपक्वानि। एषां विशेषकार्याणि प्रदर्श्य—

सुपां सुपा तिङा नाम्ना धातुनाथ तिङा तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः।

इति कारिकोदाहरणानि प्रदर्शय।

५—पञ्चकपालम्। सौधातकिः। दासेरः। वाकिनिः। कौमुदगन्ध्या। अपोनप्त्रीयम्। वात्या। वेतस्वान्। एषु पञ्च रूपाणि विग्रहप्रत्ययार्थविभक्तिप्रदर्शनेन संसाध्यानि। १२

## १९४०

१—जपमनु प्रावर्षत् । क्रूरमभिक्रुध्यति । ग्रामस्य दूरात् । अधीती व्याकरणे । एते प्रयोगा विभक्त्यर्थनिर्देशपुरःसरं संसाध्य रुच्यभिलाषयोर्धात्वर्थयोर्भेदो दीक्षितोक्तरीत्या सम्यगुपपादनीयः । १२

२—अधोलिखितोदाहरणानां समासविग्रहविशेषकार्याणि प्रदर्श्य सिद्धिः प्रदर्शनीया । १५

उन्मत्तगङ्गम् । आचारनिपुणः । उद्धरोत्सृजा । रसिकाभार्यः । विश्वदेवः । मित्रावरुणौ ।

अथवा

अनुगङ्गम् । दध्योदनः । अपचसि । मध्यमभार्यः । द्व्यन्यः । अग्नीषोमौ ।

३—निम्नलिखितप्रयोगाः साधुसाधनीयाः । ८

सराक्षसीका । हरिकामिणौ । वाक्त्वचम् । अन्धतमसम् ।

अथवा

भीरुष्ठानम् । दूर्वावणम् । वत्सा इमे । प्राध्वः ।

४—'एको गोत्रे' इति सूत्रस्य प्रयोजनं निरूपणीयम् । ५

५—उडुलोमाः । वैदिः । लमकाः । यवनः । राधानुराधीयाः । कैदारिकम् । त्रैशङ्कवम् । महिष्मान् । एषु पञ्चप्रयोगाः सविग्रहं साधनीयाः । १८

## १९४१

१—ओदनं भुञ्जानो विषं भुङ्क्ते । लक्ष्मीर्हरिं प्रति । अध्ययनेन वसति । विप्राय गां प्रतिशृणोति । मातुर्निलीयते । अधि भुवि रामः । एतेषु सूत्रनिर्देशं विशेषकार्यं प्रदर्शनीयम् ।

'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इतिसूत्रस्यार्थमभिधाय, नेतव्या व्रजं गावः कृष्णेन इति कस्य सूत्रस्योदाहरणमिति स्पष्टं लिखत । १०

२—आयतीगवम् । द्व्यहजातः । त्रिपथम् । अदूरत्रिंशाः । चतुरश्रः अश्ववडवौ । ऋग्यजुषम् । उदौदनः । पितृष्वसा । प्रतिष्काशः क्षीरपाणाः । अवलोमम् । हरितजम्भा । जरच्चित्रगुः । द्व्यह्ना । एतेषु दशप्रयोगाः विग्रहनिर्देशपुरस्सरं साधनीयाः । ६

३—कातीयाः । प्रावाहणेयिः । मैत्रेयः । शौक्रेयी । पीतकम् । दौष्कः । सवार्तिकः । पाणिनिः । काशिलः । वार्तनः । रेवती । अक्षैत्रज्ञम् । मुद्रा । जाती । एषु दशप्रयोगाः साधु साधनीयाः । १०

४—पञ्च वा षड् वा । पञ्चानां कर्मणां समाहारः । कमले इव अक्षिणी यस्याः । पुत्रश्च दुहिता च । अयञ्च रामश्च । पाटलिपुत्रादागतः । कृशानोरयम् ।

शिक्षामधीते । शरदि भवः उत्सवः । पारादागतः । एतेषु विग्रहेषु सिद्धानि कानिचित्पञ्च रूपाणि सप्रमाणं प्रदर्श्यन्ताम् । ८

५—(क) कौमारापूर्ववचने । अध्यायेष्वेवर्षेः । अनयोः सूत्रयोः पदच्छेदं प्रदर्श्य तदुदाहरणार्थो लेख्यः ।

(ख) क्षुद्राभ्यो वेत्यत आरभ्य त्रयाणां सूत्राणां क्रमं प्रदर्श्य, 'स नपुंसकम्' 'इच् कर्मव्यतिहारे' इत्यनयोरष्टाध्याय्यां कस्मिन्नध्याये पादे च पाठ इत्यपि लेखनीयम् । ८

६—अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । नेतुर्नक्षत्रे अब्वक्तव्यः । वृद्धिं प्रति फलोपधानाभावादिह न पुंवत् । हरीत्यादिषु व्यक्तिः । योगप्रमाणे च तदभावेऽदर्शनं स्यात् । एषां वचनानामर्थः स्पष्टीकरणीयः । ८

## १९४२

१—अविनीतं विनयं याचते । लक्ष्मीर्हरिं प्रति । अक्षान् दीव्यति । फलेभ्यो याति । दक्षिणः ग्रामात् । आयुष्यं कृष्णाय । गच्छतां–गच्छत्सु वा धावन् शीघ्रः । उपपरार्धे हरेर्गुणाः । एतेषु प्रयोगेषु प्रत्येकं सूत्रेण साकं कारकविभक्तिं दर्शयत । ६

परिमाणमात्रे द्रोणो व्रीहिः । इति फक्किकाविशदं व्याख्येया । ५

२—प्रत्यक्षम् । उपसमित् । त्रिपथम् । एणीपदः । उषासासूर्यम् । अप्सुयोनिः । अग्निमिन्धः । दूडभः । रम्ययूना । कारीषगन्धीबन्धुः । प्राध्वं कृत्वा । द्वादश । हरितजम्भा । कुशकाशम् । वाङ्मनसे । एषु दश प्रयोगाः सुस्पष्टं सविग्रहं साध्यन्ताम् । १०

३—माण्डुकिः । हैतनामः । शुक्रा । मानुष्यकम् । द्वितन्त्रः । वैत्रकाः । रोहिणी । षात्वणत्विकः । आङ्गकः । सामिधेनी । ऐरावतकः । मानगरः । काश्यपिनः । जम्बुः । इत्यः । एषु दशरूपाणि सविग्रहं साधनीयानि । १०

४—'गोत्रे स्वैकोनसंख्यानमि'त्यादिकारिकाद्वयं सोदाहरणं सुस्पष्टं व्याख्यायताम् । ५

५—वुञ्छणिति सूत्रोपात्तयोस्तत्तत् प्रकृतिप्रत्ययोः पृथक् स्वरूपं निर्दिश्य, उपज्ञोपक्रममित्यादि–एण्या ढञ् इत्यनयोरष्टाध्याय्यां कस्मिन्नध्याये पादे च पाठ इति विलिख्य तदुदाहरणार्थो लेख्यः । ६

६—'पूर्वस्यैवेदम्, भस्त्रैषाद्वेति लिङ्गात्' । 'पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य ग्रहणार्थम् ।' 'इति अणो लुक् तु न भवति, प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् ।' एषां त्रयाणां वाक्यानामर्थः सफलं सुस्पष्टं प्रदर्शनीयः । ८

## १९४३

१—भक्तो विष्णुं प्रति । अक्षान् दीव्यति । कृष्णाय ईक्षते । चैत्रात् पूर्वः । अधि राज्ञि राज्यम् । अत्र विभक्तिविधायकानि विलिख्य 'कर्तृकर्मणोरि'ति सूत्रे कृद्ग्रहणं सफलयत । १०

२—अधिगोपम् । अक्षपरि । मध्येगङ्गम् । गुडसंमिश्राः । बुद्धिमान्द्यम् । अर्धपिप्पली । पूर्वशालाप्रियः । युवजरती । अश्वक्रीती । द्व्यह्ना । नन्दोपक्रमम् । केऽपि षट् प्रयोगाः साधनीयाः । १०

३—वीरपुरुषको ग्रामः । बहुशः । केशाकेशि । दुर्मेधाः । बदरामलकम् । अग्निमारुतम् । गाव इमाः । राजवर्चसम् । अविकटोरणः । उदकुम्भः । सगर्भ्यः । तत्तत्कार्यनिर्देशपूर्वकं विग्रहं दर्शयित्वा साधनीयाः अष्ट प्रयोगाः । १०

४—'अचतुरे'ति सूत्रं शुद्धं लिखित्वा व्याख्या च चत्वारि उदाहरणानि देयानि । 'तसिलादिष्वाकृत्वसुचः' 'भक्ष्येण मिश्रीकरणम्' इत्यनयोः कस्मिन्नध्याये पाठः ? पृषोदरादिगणपठिताः चत्वारः शब्दा लेख्याः । ५

५—वैयासकिः राजन्यः । शाराव ओदनः । एतेषां साधुत्वं प्रसाध्य 'पाणिनीयः' इति सोपपत्तिकं साधयित्वा, शर्करया अदूरभवमिति विग्रहे कति कथञ्च रूपाणि भवन्तीति लिखत । १०

अथवा

मैत्रेयः । कौमुदगन्ध्या । अनयोः सम्यक् साधुत्वं प्रतिपाद्य अपूर्वात् सपूर्वाच्च कुलशब्दादपत्ये कति कथं च रूपाणीत्युच्यताम् । ५

६—सिद्धे यस्येतिलोपेनेति, तस्येदमित्यपत्येऽपीति वा कारिका व्याख्येया ।

## १९४४

१—ग्रामं गच्छन् तृणं स्पृशति । अविनीतं विनयं याचते । मासमासयति चैत्रम् । ५ अह्नानुवाकोऽधीतः । पुष्पेभ्यः स्पृहयति । अध्ययनात् पराजयते । चर्मणि द्वीपिनं हन्ति । उपपरार्धे हरेर्गुणाः । एषु यथेच्छं पञ्चसु विशिष्टविभक्तिविधायकानि सूत्राणि लिखत । १०

२—कर्तुः किं माषेष्वश्वं बध्नाति इत्यस्य कृति किं कृतपूर्वीकटमित्यस्य वा ग्रन्थस्याशयो वर्णनीयः । ५

३—जीमूतस्येवेत्यत्र समासफलमभिधायाधस्तनेषु यथेच्छं पञ्चसु विग्रहप्रदर्शनपूर्वकं साधुत्वं प्रदर्शनीयम् । निर्मक्षिकम् । आबालं हरिभक्तिः । सर्वश्वेतः । अरण्ये तिलकाः । महानवमी । अपचसि त्वं जाल्म । उच्चैः कृत्य । सौशमिकन्थम् । १०

४—विभाषाधिकारप्रयोजनम् , अशाला किं धर्मसभेति ग्रन्थाशयो वा स्फुटमभिधीयताम् । ५

५—सापत्नः। बहुतन्त्रीका वीणा। रुरुपृषतम्। त्रिचतुराः। स्तम्बेरमः। उद्कुम्भः। वृसी। किष्किन्धा। एषु चत्वारः साध्याः। १०

६—गार्ग्यायणः। वातण्ड्यः। बाहुकुलेयकः। वैयाघ्रः। वायसविद्यिकः। आरोहणकम्। महिष्मान्नामदेशः। एतेषु षट्प्रयोगाः साधु साध्याः। १०

१९४५

१—बलिं भिक्षते वसुधाम्। जपमनुप्रावर्षत्। अध्ययनेन वसति। उत्पथेन पथे गच्छति। चैत्रात्पूर्वः फाल्गुनः। रोगस्य चौरज्वरः। सोमं पवमानः। यदत्र मामधिकरिष्यति। एषु पञ्चैव साध्याः। १०

२—साधकतमं करणमिति सूत्रस्थतमब्ग्रहणस्य फलं स्पष्टं प्रदर्श्य, शेषे विभाषेति वचनतात्पर्यं लिखत। ६

३—उपदशाः। त्रिमुनि व्याकरणम्। नखनिर्भिन्नः। अर्धपिप्पली। घनश्यामः। अविवादः। कच्छपी। दीर्घाह्नीप्रावृट्। एषु चत्वार एव समासविधायकनिर्देशपुरःसरं साधनीयाः। ८

४—पूरणगुणेति सूत्रे समानाधिकरणपदफलं स्पष्टं निर्दिश्य शेषो बहुव्रीहिरिति सूत्रस्थशेषपदार्थः साधु स्फोरणीयः। ८

५—सर्विका। सन्दिग्धसाध्यधर्मा। दशदन्तोष्ठाः। अश्वा इमे। त्र्यायुषम्। पितुःष्वसा। सोदर्यः। शुष्कगोमयेण। एषु केचन चत्वार एव समाधेयाः। ८

६—तस्येदमित्यपत्येपि बाधनार्थं कृतमिति कारिकातात्पर्यं विविच्य, मैत्रेयः। शूरसेनी। पित्र्यम्। वैत्रकाः। एतेषां सिद्धिप्रकारं निर्दिशत। १०

अथवा

गार्गीयाः। प्रावाहणेयिः। यौवतम्। हरीतक्यः। एषां सिद्धिं प्रदर्श्य, सिद्धे यस्येति लोपेन किमर्थं ययताविति कारिकातात्पर्यं विवेचयेत्।

१९४६

१—बहवः। दर्शयति हरिं भक्तान्। अक्ष्णा काणः। नमस्कुर्मो नृसिंहाय। स्वस्ति गोभ्यो भूयात्। ग्रामाद्बहिः। ब्राह्मणस्य कुर्वन्। अधिरामे भूः–एषु केचन पञ्च विशिष्टविभक्तिविधायकशास्त्रनिर्देशपुरःसरं साध्याः। १०

२—भूतपूर्व इत्यत्र समासपूर्वनिपातौ समर्थ्य, अधिहरि। आयतीगवम्। रन्धनाय स्थाली। द्व्यहजातः। पञ्चगवधनः। महानवमी। अष्टागवं शकटम्। पिशाचसमम्–एषां चत्वार एव यथेच्छं साधनीयाः। १२

३—प्रातिपदिकार्थलिङ्गेति सूत्रे परिमाणपदतात्पर्यं साधूपपाद्यान्यकर्तृकोऽभिलाषो रुचिरिति ग्रन्थस्याशयः परिस्फुटं वाच्यम्। ५

४—गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरित्यत्र वीजफले सम्यङ् निर्दिश्यामैवाव्ययेनेति सूत्रस्थैवकारपद फलं लिखत। ५

५—चित्राजरद्गुः। द्विमुसलि। बदरामलकानि। तदिदं शुक्लम्। अनूपो देशः। आमुष्यायणः। अतिकारीषगन्ध्यपुत्रः। गार्गभगिनी—एषु पञ्चानां सिद्धिः कार्या। १०

६—ग्लौचुकायनः। चटका। यौधेयी। अपोनप्त्रीयम्। वासवदत्ता। गोदौ रमणीयौ—एषु केचित् चत्वारः साध्याः। ८

१९४७

१—शत्रूनगमयत्स्वर्गम्, ग्रामं समया, जटाभिस्तापसः, क्रूरमभिक्रुध्यति, न त्वां शुने मन्ये, प्राक् प्रत्यग् वा ग्रामात्, हरिं दिदृक्षुः, उपपरार्धे हरेर्गुणाः, ६ एषु केचन पञ्चैव प्रयोगाः साधु साधनीयाः। १०

२—कर्तुरीप्सिततमं कर्मेति सूत्रस्य तमब्ग्रहणस्य कर्तृकर्मणोः कृतीति सूत्रस्थ-कृतिग्रहणस्य वा प्रयोजनं सुस्पष्टं लेखनीयम्। ७

३—अतिहितम्, उपराजम्, दध्योदनः, अपरकायः, युवजरती, राजान्तरम्, निष्कौशाम्बिः, संख्याताहः, एषां पञ्चैव साध्याः। १०

४—पारे मध्ये षष्ठ्या वेति सूत्रघटक 'वा' पदस्य तात्पर्यं प्रतिपाद्य तत्पुरुषोऽनञ्कर्मधारय इत्यधिकारसूत्रस्य प्रयोजनं स्पष्टं प्रतिपादयत। ५

५—सापत्यः, द्व्यन्यः, काकोलूकम्, आग्निवारुणम्, तौ, अप्सव्यः, सज्योतिः, पुरगावणम्। एतेषां चत्वार एव साध्याः। ८

६—एको गोत्रे इति सूत्रारम्भफलं मतभेदेन विशदं प्रदर्शनीयम्। १०

अथवा

औपगवी, राजन्यः, कौमुदगन्ध्या, वैयाघ्रः, पार्श्वम्, कठाः, शर्करीयम्, एतेषां केषांचित् पञ्चानामेव सिद्धिः कार्या।

१९४८

१—हरिं भजति। माणवकं धर्मं ब्रूते। धिक् कृष्णाभक्तम्। अक्ष्णा काणः। पशुना रुद्रं यजते। नमस्करोति देवान्। अप हरेः संसारः। सर्पिषो नाथनम्। शतं दायी। एषु केषाञ्चित्पञ्चानाम्प्रयोगाणां साधुत्वम्प्रदर्श्य प्रातिपदिकार्थसूत्रे परिमाणग्रहणस्य फलं ब्रूत। १०

अथवा

ओदनं भुञ्जनो विषं भुङ्क्ते। गां गोभिश्च पयः। वेदमध्यापयद्विधिम्। अपि स्तुयाद् विष्णुम्। अध्ययनेन वसति। ग्रामाय ग्रामं वा गच्छति। मातुः स्मरति। मातरि साधुः। एषु केषाञ्चित्पञ्चानां साधुत्वम्प्रदर्श्य मन्यकर्मणीतिसूत्रे तमब्ग्रहणस्य फलम्प्रदर्शयत।

२—साधकतममितिसूत्रे तमब्ग्रहणस्य फलं प्रदर्शयत। ४

३—अधिहरि, उपशरदम्, सर्वश्वेतः, अर्धपिप्पली, एकनाथः, कुम्भकारः, अहोरात्रः, रूपवद्भार्यः—एषु पञ्चानां सिद्धिः प्रदर्शनीया। १०

४—केशाकेशि, जलजाची, रुरुपृशतम्, स्तम्बेरमः, बलाहकः, प्रवणम्, पैलः— एषु पञ्चैव प्रयोगा विशेषसूत्रोपन्यासपुरस्सरं साधनीयाः। १०

५—मैत्रेयः, भारतः, १०

६—कर्तुरीप्सिततमं कर्मेतिसूत्रे कर्तृग्रहणस्य प्रयोजनं साधुप्रदर्शयत। ६

१६४६

१—हे राम। अविनीतं विनयं याचते। क्रोशमास्ते। सर्वतः कृष्णं गोपाः। हरये रोचते भक्तिः। फलेभ्यो याति। ग्रामादायाति। शतस्य दीव्यति। समुद्रम्। सहगङ्गम्। एषु केषाञ्चित्पञ्चानाम्प्रयोगाणां साधुत्वम्प्रदर्श्य कर्तृकर्मणोः कृति·इति सूत्रे कृति·इति पदस्यफलमुपपादयत। १०

अथवा

नीचैः। वृक्षमवचिनोति फलानि। शत्रूनगमयत्स्वर्गम्। यागाय याति। अन्तरा त्वां मां वा हरिः। विप्राय गां ददाति। हरिं दिदृक्षुः। अपदिशम्। उपराजम् एषु षण्णां साधुत्वम्प्रतिपाद्य पारे मध्ये षष्ठ्या वा·इति सूत्रे वाग्रहणस्य प्रयोजनमुपदर्शयत।

२—कृष्णश्रितः। यूपदारु। पूर्वकायः। एकनाथः। षोडन्। चित्रगुः। द्विमूर्धः। उदगन्धिः। एषु केऽपि सप्तैव प्रयोगा विशेषसूत्रोपन्यासपुरस्सरं साधनीयाः। ७

३—निष्प्रवाणि पटः। शिवकेशवौ। प्लक्षन्यग्रोधम्। हंसौ। द्विभूमः। अर्धर्चः। ब्रह्मवर्चसम्। एतेषां साधुत्वम्प्रदर्श्य–अचतुरेत्यादिसूत्रं लिखत।

४—शरदिजः। उदकुम्भः। कापथम्। द्विगुणाकर्णः। वैयासकिः। गौधेरः। राजन्यः। कौमुदगन्ध्या। भ्रातृव्यः। एते साधनीयाः। १०

५—वाम्रीरथः। कैश्यम्। १०

१६५०

१—हरिं भजति, ओदनं भुञ्जानो विषं भुङ्क्ते, आसयत्सलिले पृथ्वीम्, मासं कल्याणि, अग्नये स्वाहा, चौराद् बिभेति, व्रजंगामी, गवांस्वामी, अधिहरि, एषु केषाञ्चित्सप्तानां साधुत्वम्प्रदर्श्य प्रातिपदिकार्थसूत्रे परिमाणग्रहणं सफलयत। अथवा १०

श्रीः, व्रजमवरुणद्धि गाम्, अच्णा काणः नाययति भारं भृत्येन, सुसिक्तम्, जटाभिस्तापसः, मातुः स्मरणम्, लोहितगङ्गम्, एषु सप्तानां सिद्धिं विधाय साधकतममितिसूत्रे तमप्प्रयोजमम्प्रदर्शतोयम्।

२—खट्वारूढो जाल्मः, द्विजार्थः सूपः, राजपुरुषः, सतां षष्ठः, अर्धपिप्पली, पापनापितः, इभपोटा, पञ्चमूली, ऊढरथः, उपदशाः, द्रुणसः एषु पञ्चैव विशेषकार्योल्लेखपुरस्सरं साध्याः। १०

३—पाणिपादम्, रुरुपृषतम्, द्वीपम्, अञ्जसाकृतम्, ब्राह्मणितरा, दूडाशः, दैत्यः, एषु पञ्चानां साधुत्वं विधाय तस्येदामित्यपत्येऽपीति फक्किका व्याख्येया। १०

४—गार्ग्यः, द्वैमातुरः, कुलीनः, मानुष्यः, वायव्यम् धैनुकम् , मधुमान् , एषु पञ्चानां साधुत्वम्प्रदर्श्य दाण्डिनायनेतिसूत्रमविकलम्प्रदर्शनीयम् । १०

१९५१

१—बलिं याचते वसुधाम् । वेदमध्यापयद्विधिम् । अधिवसति वैकुण्ठं हरिः । अक्ष्णा काणः । हरये रोचते भक्तिः । विप्राय गां प्रतिशृणोति । मातुर्निलीयते कृष्णः । चौरस्य रोगस्य रुजा । गोषु दुह्यमानासु गतः । अधिभुर्विरामः । एषु केषांचित् षण्णां साधुत्वमभिधाय कर्तुरीप्सिततममितिसूत्रे कर्तृग्रहणस्य प्रयोजनं ब्रत । १०

अथवा

कुरून् स्वपीति । उपर्युपरिलोकं हरिः । पुत्रेण सहागतः पिता । होत्रे अनुगृणाति । धावतोऽश्वात् पतति । ग्रामस्य पुरः पुरस्तात् । छात्राणां छात्रेषु वा मैत्रः पटुः । भूतपूर्वः । प्रत्यर्थम् । अध्यात्मम् । एषु केषांचित् सप्तानां सिद्धिप्रकारं प्रतिपाद्य 'एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वमिति फक्किकायाः क आशयः इति सम्यगुपपाद्यताम् ।

२—नखनिर्भिन्नः । सर्वश्वेतः । पौर्वशालः । द्व्यङ्गुलं दारु । पिशाचसभम् । कल्याणपञ्चमोकः पक्षः । केशाकेशि । महायशस्कः । कुड्मलाग्रदन् । एषु षट् प्रयोगाः तत्तत्समासविधायकशास्त्रनिर्देशपुरस्सरं साधनीयाः । १०

३—पदकक्रमकम् । शीतोष्णे उदके स्तः । गर्गाः । सखिपथः । नक्तंदिवम् । कदश्वः । विश्वामित्रः । एषु केषांचित् पञ्चानां साधुत्वं विधाय-आदिवृद्धिरन्त्योपधावृद्धी बाधते, अस्याः पङ्क्तेराशयं वदत । १०

अथवा

अहिनकुलम् । मित्रावरुणौ । वाक्त्वचम् । हंसौ । विपलापं सरः । आत्मना पञ्चमः । पद्भिमन् । तिमिङ्गिलः । कापुरुषः । एषु केषांचित् पञ्चानां साधुत्वं प्रदर्श्य, एकोगोत्रे·इतिसूत्रस्य प्रयोजनमभिधत्त ।

४—नाडायनः । जाडारः । आनिरुद्धः । मनुष्यः । यौवतम् । पाकयाज्ञिकः । एषु केषांचित् त्रयाणां साधुत्वं निगद्य महेन्द्र, केदार, केश, शब्दानां रक्तद्यर्थके कानि रूपाणि कथं च तानि सिध्यन्ति । १०

५—शर्करा शब्दस्य चातुरर्थिके रूपाणि—तत्तत्प्रत्ययनिर्देशपूर्वकं संसाध्यपूर्वेषुकामशमः । १०

१९५२

१—गाणपतम्, कातीयाः, तिककितवाः, भद्रसामः, पैतृस्वस्रीयः, सूत्रनिर्देशपुरस्सरं त्रयाणां साधुत्वं प्रदर्शनीयम् । ९

२—तस्येदमित्यपत्येपि बाधनार्थं कृतं भवेत् । उत्सर्गः शेषएवासौ वृद्धान्यस्य प्रयोजनम् । ८

अथवा

सिद्धेयस्येतिलोपेन किमर्थं ययतौ डितौ ।

ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे । साधु व्याख्यायताम् ।

३—औदश्वित्कः, कैदारिकम्, सर्ववेदः, कठाः, इक्षुमती, शर्करा सूत्रनिर्देशपूर्वकं चत्वारः साधनीया । ८

४—शौवस्तिकम्, मुद्रकः, तक्षकीयः, अङ्गाः, कम्बोजः, त्रयाणां यथापठितं साधुत्वं दर्शयत । १९

१९५३

१—माणवकं धर्मं भाषते, सर्वतः कृष्णम्, अह्ना क्रोशेन वानुवाकोऽधीतः, विप्राय गां प्रतिश्रृणोति, यवेभ्यो गां वारयति, ग्रामस्य दक्षिणतः, शतस्य व्यवहरणम्, केशेषु चमरीं हन्ति, मथुराः पाटलिपुत्रकेभ्यः आढ्यतराः, एषु केषांचित् सप्तानां साधुत्वमभिधीयताम् । १०

अथवा

कर्तुः किम् माषेष्वश्वं वध्नाति, गतिबुद्धीत्यादिसूत्रे गतित्यादिकिमित्यनयो॰ राशयमविकलं निरुच्य कृष्णाय शपते, आरात् वनात्, दक्षिणेन ग्रामं ग्रामस्य वा, शतं दायी, सदृशः कृष्णस्य कृष्णेन वा, गोषु दुह्यमानासु गतः— एषु केचिच्चत्वारः प्रयोगाः साधु साधनीयाः ।

२—अपदिशम्, परोक्षम्, सर्वश्वेतः, सयाह्नः, महानवमी, युवजरती, निश्श॰ प्रचम्, नाकः, पुण्याहम्—एषु षट् प्रयोगाः साधनीयाः । १०

३—चित्रगुः, मुष्टामुष्टि, उन्नसः, पदकक्रमकम्, दधिपयसी, कुम्भकारः, अक्षिभ्रु॰ वम्, कर्णेजपः, पक्वेष्टकचितम्, सुषामा, गोष्पदः—एषु अष्टौ प्रयोगाः सम्यक् साधनीयाः । १०

४—आदित्यः, पैलः पितापुत्रश्च, नाडायनः, गर्गाः, वैनतेयः, वाङ्गः, शौक्रेयी, वाराह्या—एषु षट्प्रयोगाः प्रकृतिप्रत्ययप्रदर्शनपुरस्सरं साधनीयाः । १०

५—तिष्यपुनर्वसवीयमहः, पौषो मासः, पाकयाज्ञिकः, शतपथिकः, वार्णवम्, पाञ्चालाः, नडकीयम्, एते प्रयोगाः प्रकृतिप्रत्ययनिर्देशपुरस्सरं साधनीया । १०

अथवा

कृतसन्धेः किम् सौत्थितिः अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत्, सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितावित्यादि॰, ह्रस्यकिम् ह्रमात्रस्य लुग् यथा स्यादित्यादि॰, आसु पङ्क्तिषु कयोश्चिद् द्वयोराशयं सम्यगभिधत्त ।

## १९५४

१—ग्रामं गच्छंस्तृणं स्पृशति, अविनीतं विनयं याचते, अभिनिविशते सन्मार्गम्, जटाभिस्तापसः, फलेभ्यो याति, दक्षिणेन ग्रामं ग्रामस्य, आश्चर्यो गवां दोहोऽगोपेन, अधिरामे भूः, गोषु गवां वा प्रसूतः, एषु केचित् पञ्च प्रयोगाः तत्तत्कारकविधायकशास्त्रनिर्देशपुरस्सरं साधनीयाः। १०

२—सचक्रम्, उपगिरम्, नखनिर्भिन्नः पूर्वशालाप्रियः, द्विनावरूप्यः, पञ्चगवम्, महाजातीया, गणरात्रम्—एषु पञ्च प्रयोगान् समासविधायकशास्त्रवर्णनपुरस्सरं साधयत। १०

३—प्राप्तोदको ग्रामः, स्त्रौघ्नीभार्यः, उभयाहस्ति, युवजानिः, मातापितरौ, प्रतीपम्, दृषदिमाषकः, पृषोदरम्, किष्किन्धा, एषु केचन पञ्च प्रयोगाः तत्तत्समासविधायकसूत्रनिर्देशपूर्वकं साधनीयाः। १०

४—एको गोत्रे इति सूत्रस्य प्रयोजनमभिधाय द्वैमातुरः, तिककितवाः, सौरमसः, अगस्तयः, नापितायनि, पौणिक्या, एषु केचन चत्वारः प्रयोगाः सूत्रनिर्देशपूर्वकं साध्यन्ताम्। १०

५—राजन्यकः, आथर्वणिकः, सौतंगमिः, बैल्वकाः, कौरुजाङ्गलम्, पाणिनीयम्, कालापाः, आयसम्, आधिभौतिकम्, एषु पञ्च प्रयोगान् सम्यक् साधयत। १०

## १९५५

१—अधितिष्ठति वैकुण्ठं हरिः, सर्पिषोऽपि स्यात्, अक्ष्णा काणः, पशुना रुद्रं यजते, मातुर्निलीयते कृष्णः, पञ्चकृत्वोऽह्नो भोजनम्, सीम्नि पुष्कलको हतः, एषां केष्वपि पञ्चसु विभक्तिविधायकानि सार्थं सूत्राणि लेख्यानि। १०

२—पारेगङ्गम्, उपशरदम्, कृष्णश्रितः, ब्राह्मणस्य शुक्लाः, अर्द्धपिप्पली, सापत्नः, वैयाकरणभार्यः, सुप्रजाः, एषु पञ्चानां साधुत्वं समास-विग्रहप्रदर्शनपूर्वकम्प्रतिपादनीयम्। १०

३—मित्रावरुणौ, तौ, अनूपो देशः, वाङ्मनसे, उरसि लोमा, ब्राह्मणितरा, कारीषगन्धीबन्धुः, रोहिणीषेणः, एषु केऽपि पञ्चैव साध्याः। १०

४—कवोष्णम्, मर्मावित्, विश्वामित्रः, हरिकामिणौ, विष्किरः, अजस्तुन्दम्, आश्वपतम्, कालेयम्। एषु केऽपि पञ्चैव तत्तदर्थप्रत्ययप्रदर्शनपूर्वकं साधनीयाः। १०

५—पञ्चकपालः, पैलःपिता पुत्रश्च, बाहविः, गार्ग्यः, आश्वायनः, द्वैमातुरः, नैधेयः, काषायम्। एषां केष्वपि पञ्चसु अर्थविग्रहविशेषकार्याणि ससूत्रं प्रदर्शनीयानि। १०